नाक्षस्तुष कर्षफलो भूतावास. कलिद्रुम ।
अभया त्वव्यथा पथ्या कायस्था पूतनामृता ॥ ५९ ॥
हरीतकी हैमवती चेतकी श्रेयसी शिवा ।
पीतद्रु सरल पूतिकाष्ठं चाथ द्रुमोत्पल. ॥ ६० ॥
कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ।
पनस कण्टकिफलो निचुलो हिज्जलोम्बुजः ॥ ६१ ॥
काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला ।
अरिष्ट सर्वतोभद्रहिङ्गुनिर्यासमालका. ॥ ६२ ॥
पिचुमर्दश्च निम्बेथ पिच्छिलागुरुशिंशपा ।
कपिला भस्मगर्भा सा शिरीषस्तु कपीतन. ॥ ६३ ॥
भण्डिलोप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ।
एतस्य कलिका गन्धफली स्यादथ केसरे ॥ ६४ ॥

---

॥ ५९ ॥ हरति रोगान् हरीतकी । चयतेनया यान गुदेवेनकी । आह च- हरीतक्यभया पथ्या प्रपथ्या पूतनामृता । जयाव्यथ हैमवती कायस्था चेतकीति च ॥ इयर्थं श्रेयसी रास्ना हरीतकी हस्तिपिप्पली च। शिवाव्यथा पूतनेति चन्द्र. । सरल, ऋजुत्वात्, आह च- सरल पूतिकाष्ठ च चित्रा पीतद्रुदच्छित. । द्रुमोत्पलानीव पुष्पाण्यस्य । द्रुमोत्पल, सुरभत्र यम्, अन्यो निर्गन्ध ॥ ६० ॥ कर्णिकामियर्ति कर्णिकार । द्वयर्थे परि०व्याधो जलवेतस कणिकारश्च । लकयत अस्य यने लकुच । दयते डहु । पन्यते स्तूयते पनस, पणस इति दुर्ग । लोकोक्त्या कण्टकयुक्तफल । महागणौति । निचोल्यतेम्बुना निचोलः (निचुल)। हितजलस्य पर्यायो हिज्जलोम्बुवेतस विशेषत्वात् ॥ ६१ ॥ काकप्रियोदुम्बरी । फलति फल्गु । मल श्रिर्न पावयति मलयु छिन्नभेदजम्, (मल्यू) यु जुगुप्सायाम् । जघने सूक्ष्मे फला न्यस्या जघनफला, आह च- काकोदुम्बरिका फल्गुराजी फल्गुवाटिका । फल्गुन फलभारी च मलयू भिन्नभेदजम् ॥ हिङ्गुवन्निर्यासोस्य । मालयत वेष्टयते क केसोलक, शुक्लमालकेत्येकेशब्दमम् ॥ ६२॥ पिचुं मर्दयति पिचुमर्द, अरोगत्वात्, पिचुमन्द इत्येके । पचनेष्वपीति सौश्रुताः। शाश्वतस्तु- हिङ्गुनिर्यासशब्दोयं निम्ब हिङ्गुरसेपि च । चन्द्रनन्दनस्तु शुक्लमालकमाह । अगुरुतुल्यसारा शिशपा अगुरुशिंशपा, यदाह- शिंशपा तु महाश्यामा कृष्णसार स्मृतोऽगुरु । अगुरुर्दुमस्य शिंशपासारं चाहु। द्वयर्थे पिच्छिला शाल्मलि शिंशपा च, यदाह- कपिलशिंशपाख्या कपिला भस्मगर्भा च सादिनी । शिरसीष्यते शिरीष, ईषयते वा शे कुसुमत्वात् ॥ ६३ ॥ भण्डयत भण्डिल, भण्डिलोपि, आह च- शिरीषो मृदुपुष्पश्च भण्डिलः शुकपुष्पक । कपीतन मक्षक श्यामलक शुकप्रिय ॥ भण्डीरपके । चम्पदेशे भवश्चाम्पेय । चम्पनाचेति भिन्नमरु, चाम्पकेति । आह च- चम्पक सुकुमारश्च सुरभि शीतलश्च स । चाम्पेयो हेमपुष्पश्च काञ्चन पद्मदारिपि ॥ गन्धः फलस्या गन्धफली । प्रियङ्गुश्चम्पककलिकाचेति द्वयर्थे ग. न्धफली। के माति केसरा चन्दनस्य वा केसर ॥ ६४ ॥ उरयते बकुल. । आह च- बकुल सीधुगन्धश्च मदगन्धेष शारद । मधुगन्धो मृदुपुष्प सिन्धी केसरवल्लभा ॥ अस्तुनेऽशोक, शोकनाशकत्वाद्वा । यदाह- अशोक शोकनाशश्च विचित्र कर्णपूरक । इयर्थे वञ्जुलो वेतस स्यन्दोऽशोकश्च । तिरति कण्टकैरिक । दलयते दाडिम । आह च- दाडिमो दाडिम स्या कुट्टिम फलषा(डा)डव । स्वाद्वम्लो रक्तबीजश्च करक शुकवल्लभ ॥ नागविन्दु केसरवाति पुष्पकेसर नागकेसर । आह च- न गपुष्पो

च-व-कुलो वञ्जुलोऽशोके समौ करकदाडिमौ ।
चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ॥ ६५ ॥
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ।
श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका ॥ ६६ ॥
जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ।
एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ॥ ६७ ॥
कृष्णपाकफलाविग्नसुषेणाः करमर्दके ।
कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुकः ॥ ६८ ॥
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ।
वेणी ग(ख)रागरी देवताडो जीमूत इत्यपि ॥ ६९ ॥
श्रीहस्तिनी तु भूरुण्डी तृणशून्यं(न्यं) तु मल्लिका ।
भूपदी शीतभीरुश्च सैवास्फोता वनोद्भवा ॥ ७० ॥

---

मनो नागः केसरोः नागकेसरः । चाम्पेयो नागकिञ्जल्कः कनकं हेम काञ्चनम् ॥ ६५॥ जयतीति जया । तर्कमियर्ति तर्कारी केतुत्वात् । अग्निं मथ्नाति दीपनत्वादग्निमन्थः, अत एवारणिः । कणाः सन्त्यस्याः कणिका । गणिकासमूहमियर्ति गणिकारी, स्वार्थेकन्, गणिं तर्कं करोतिवा । अयें नादेयी जलजम्बूर्जलवेतसलकौरी च । लिङ्गसांकर्यान्वियेत्यर्थेन जयन्तं(न्तीं) श्रीपर्णमिति चार्धेन जयपर्यायमाहुः, तन्न, वनौषधिवर्गे तस्यानादृतत्वात्, यदिन्दुः– अग्निमन्थोऽग्निमथनस्तर्कायरणिको जरः । अरणिः कणिका सैव तपनो वैजयन्तिकः ॥ चन्द्रनन्दनस्त्वाह– अग्निमन्थोऽग्निमथनस्तर्कारी वैजयन्तिका । वह्निमन्थोऽरणिः केतुर्जयः पावकमन्थनः ॥ तर्कारी वैजयन्ती च वह्निनिर्मथनी जया । अरणिका जयन्ती च विजया च जयावहा ॥ ६६ ॥ कुटिलो (कुटे) जायते कुटजः । शक्र इन्द्रवृक्षः । वत्ते त्वचं वत्सकः । आह च– कुटजः कौटजः कौटी वत्सको गिरिमल्लिका । कलिङ्गो मल्लिकापुष्प इन्द्रवृक्षोऽथ वृक्षकः ॥ कलिं गायति कलिंगं, कलिङ्गदेशजं वा, अत एव कालिङ्गं कालिङ्गी च । इन्द्रयवं कुटजफलं, भद्रयवं तु कुटजबीजं, यदाह– फलानि तस्येन्द्रयवा बीजं भद्रयवास्तथा ॥ ६७ ॥ कृष्णः पाके फलमस्य । आविग्नते स्माविग्नः । सुषेणकपिमुखाभः । करेण मृद्यते करमर्दः, कराम्लोऽपि । आह च– करमर्दकनाविग्न सुषेण पाणिमर्दकम् । कराम्लं करमर्दं च– ॥ [ कालः स्कन्धः प्रकाण्डोऽस्य ] । अयें कालस्कन्धस्तिन्दुकः श्यामसारदिरस्तमालस्य । ताम्यति तमालः । तापिनश्छादयति तापिच्छः ॥६८॥ स्यन्दते सिन्दुकः । स्यन्द वृणोति सिन्दुवारः । इन्द्रस्य सुरसो यस्मिन्, दिव्य इत्यर्थः । अत एवेन्द्राणी । निष्कृन्ता गुडाह्वयनाम्निर्गुंडी निर्गुण्डी च । आह च– सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः । नीलपुष्पः शीतसहो निर्गुण्डी नीलसिन्दुकः । वेणीव वेणी । गरमागिरति गरागरी मूषिकाविषघ्नत्वात् । कर्णौ ताडयति ताडः, कुटन्नद्रे– घनाद्यौ राजनारवत् । जीमूतो ह्लादकत्वात् । आह च– जीमूतको देवताडो वृत्तकोशो गरागरी । प्रोक्ता– मुनिसहा वेणी देवताली च ताडकः ॥ ६९ ॥ भुवि रोहति भूरुण्डी । हस्तिकर्णपत्रा शाकविशेषः । हस्ती धत्ते पुष्पाणि । तृणशून्ये गुल्मे साधु तृणशून्यम् । मल्यते मूर्धि मल्लिका । भुवि पद्यमस्या भूपदी । शीतभीरुर्ग्रीष्मकरत्वात् । आह च– मल्लिका शीतभीरुश्च मदयन्ती प्रमोदनी । मदनीया गवाक्षी च भूपदी तथा ॥ दिवृताग्नेः विचकिलन्– । आस्फुटत्यस्फोता गिरिमल्लिका ॥७०॥ वेष्टने दासा अल-

शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ।
सितासौ श्वेतसुरसा भूतवेश्यथ मागधी ॥ ७१ ॥
गणिका यूथिकाम्बष्ठा सा पीता हेमपुष्पिका ।
अतिमुक्त पुण्ड्रकः स्याद्वासन्ती माधवी लता ॥ ७२ ॥
सुमना मालती जातिः सप्तला नवमालिका ।
माध्य कुन्द रक्तकस्तु बन्धुको बन्धुजीवक ॥ ७३ ॥
सहा कुमारी तरणिरम्लानस्तु महासहा ।
तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः ॥ ७४ ॥
नीला झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ।
सैरेयकस्तु झिण्टी स्यात्तस्मिन्कुरवकोरुणे ॥ ७५ ॥
पीता कुरण्टको झिण्टी तस्मिन्सहचरी द्वयो ।
ओड्रपुष्पं जपा( वा ) पुष्प वज्रपुष्प तिलस्य यत् ॥ ७६ ॥

---

घोस्यां शेफालिका । सुष्ठ वहत्यामोद सुवहा । नीलवर्णा ( नीलिका ) । आह च– शेफालिका तु निर्गुण्डी यमको नालमञ्जरी । त्र्यर्थे सुवहा रास्ना शेफालिका गन्धनाकुली च । भूतानि विशत्याक्र्दयति भूतवेशी । मगधदेशे भवा मागधी ॥७१॥ गणिका चित्ताकर्षणात् । यूथो जालकमस्या यूथिका । अम्बे शब्दे तिष्ठत्यम्बष्ठा । आह च– यूथिका बालपुष्पा च पुण्यगन्धा गुणोज्ज्वला । गणिकाचारमोगा च शिखण्डी श्वेतयूथिका ॥ आह च– सुवर्णपुष्पा हरिणी पीतका पीतयूथिका । त्र्यर्थे हेमपुष्पा बिम्बी तु स्पर्शा पीतयूथिका च । अतिक्रान्तो मुक्तान्विरक्तानतिमुक्त । पुण्ड्रदेशे भव पुण्ड्रक, मण्डकायमिति **निघण्टुः** । मधौ वसन्ते भवा माधवी । आह च– अतिमुक्ता माधवी च सुवसन्तो वनाश्रय । अतिमुक्त कामुकश्च मण्डकौ भ्रमरोत्सव ॥७२॥ सुष्ठ मन्यते सुमना मनोज्ञत्वात् । मालयत्यामोदैर्मालती । जायतेनया प्रीतिर्जातिः । आह च– जातिर्मनोज्ञा सुमना राजपुत्री प्रियवदा । मालती हृद्यगन्धा च वेदिका (?) तैलभागि(वि)नी । सप्त मनोज्ञत्य तानीन्द्रियाणि लाति सप्तला, सपति समवैति वा । नवा स्तुत्या मालास्या नवमालिका । माघे मासि भव माघ्यम् । कुन्दति कु द, कुन्द इति **माला** । बध्नाति चित्त बन्धूक । बन्धुर्जीवाना बन्धुजीवक ॥७३॥ सहते परिमल सहा । कु भूमिष्ठा मारयति कुमारी, कुत्सितो मारोस्या इति वा, जरा न यातीत्येके । तरत्यनया[ दु ख ]तरणि, यच्चन्द्रनन्दन – कुर्यैकस्तरणिर्वल्ली कुमार्यैलिकुलप्रिया । त्र्यर्थे सहा मुद्गपर्णी बला( चा ) तरणी च । कुरण्टको हि म्लानिं न गच्छति तेनाम्लान, **वात्स्यायनोत** एव कूर्चकस्थाने कुरण्टकमालाश्चेत्याह । वर्णपुष्पोपि । महतो विमर्दस्य सहा महासहा, आवन्त, यन्माला– गम्लानस्तु कुरण्टक । तत्राम्लाने, शोणे रक्तवर्णे कुरवक । कौ रम्यते कुरण्टक, कुरण्डकोपि । आह च– अविम्लानोऽपरिम्लानस्तथैवाम्लानक स्मृत । रक्तपुष्प कुरबक पीतपुष्प कुरण्टक ॥ किंकिरातोसौ ॥ ७४ ॥ या नीलपुष्पा झिण्टी, शुष्का झिं रटतीति । बाणा हि द्विलिङ्ग, वण शब्दे । दस्यति क्षीयते दासी । आर्तं क्षीणो गलत्यार्तगल । सीर भवा सैरेयाख्या झिण्टी– अरुणपुष्पा चेत्कुरवकोसौ ॥ ७५ ॥ सहचाराख्या झिण्टी पीतपुष्पा चेत्कुरण्टकोसौ । आह च– सैरेयक सहचर सैरेयश्च सहाचर । पीतो रक्तोथ नीलश्च कुसुमैस्त विभावयेत् ॥ पीत कुरण्टको ज्ञेयो रक्त कुरवक स्मृत । नील आर्तगलो दासी बाण श्चादनाशयति ॥ ओड्रदेशाद्भव पुष्प, जपतीति जपा । वज्रमिव दारक वज्रपुष्पम् ॥ ७६ ॥ प्रतीपो-

प्रतिहासशतप्रासचण्डातहयमारकाः ।
करवीरे करीरे तु ककरग्रन्थिलावुभौ ॥ ७७ ॥
उन्मत्तः कितवो धूर्तो धत्तूरः काञ्चनाह्वयः ।
मातुलो मदनश्चास्यफले मातुलपुत्रकः ॥ ७८ ॥
फलपूरो बीजपूरो रुचको मातुलुङ्गके ।
समीरणो मरुवकः प्रस्थपुष्पः फणिज्झकः ॥ ७९ ॥
जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ ।
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः ॥ ८० ॥
अर्काह्ववसुकास्फोट( त )गणरूपविकीरणाः ।
मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ॥ ८१ ॥

---

अनन्वादहासो विकासोऽस्य प्रतिहासः । शतं बहूनि प्रासाः कुन्ता इव पुष्पाण्यस्य शतप्रासः, श्वेतश्चासौ । चण्डय( प्त )ति दीप्तत्वाच्चण्डातः, रक्तोऽसौ । करवीर इव मारकत्वात्करः कर्तारो वीरा अत्रेति । आह च– शतकुन्तः श्वेतपुष्पः प्रतिहासोऽश्वरोहकः । द्वितीयो रक्तपुष्पस्तु चण्डातो लगुडस्तथा ॥ चण्डातरो गुल्मकश्च प्रचण्डः करवीरकः । करिण ईरयति कण्टकैः करीरो मरुवृक्षः । केति करोति ककरः, तीक्ष्णत्वात् । आह च– करीर गूढपत्रं च शाकपत्रं मृदूफलम् । ग्रन्थिलं तीक्ष्णसार च ककर तीक्ष्णकण्टकम् ॥ ७७ ॥ उन्मत्त उन्मादकत्वात् । धूर्वति हिनस्ति धूर्तः, अत एव कितवः । धरति धावन् धत्तूरः ( धस्तूरः ), धत्तूरमिति प्राच्याः । काञ्चनाह्वो भुक्तेऽस्मिन् हेमवर्णपृथ्वीदर्शनात्, यदिन्दुः– संज्ञेयो हेमनामभिः । नास्ति तुलास्य मातुलः, अमानोना. प्रतिषेधे । मदयति मदनः । आह च– धत्तूरकः स्मृतो धूर्तो देविला कितवः शठः । उन्मत्तको मदनकस्तूरी चलतलस्तथा ॥ यतो धन्वन्तरिर्मातुलं धत्तूर मातुलपुत्रक तत्फलमाह ॥ ७८ ॥ रोचयति रुचकः । आह च– फलपूरो बीजपूरः केसरी बीजपूरकः । बीजकः केसराम्लश्च मातुलुङ्गस्तु पूरकः ॥ **अनेकार्थे–** सौवर्चलं मातुलुङ्गं शिला चन्द्रनपंपणी । ग्रीवाभरणके चेषु चतुर्षु रुचकं स्मृतम् । समीरयत्यामोदं समीरणः । मरौ वाति मरुवकः । प्रस्थे सानौ पुष्पति जाङ्गलत्वात्प्रस्थपुष्पः । खरत्वेन फणाभपत्रत्वाद्दृश्यः फणिज्झकः ॥७९॥ जम्यते जम्बीरः, जम्भीरोऽपि । आह च– जम्बीरः खरपत्रश्च फणी चोक्तः फणिज्झकः । मरुतको मरुवको मदन्मारिचकस्तथा ॥ पर्णान्यस्यति पर्णासः । कठिनं जरयति कठिञ्जरः । कुष्णाति कुठेरकः कृष्णार्जकाह्वयः । ( शुक्लः कुठेरोऽर्जकः ), अर्जयतीति । आह च– कुठेरकस्तु वैकुण्ठः क्षुद्रपत्रोऽर्जकः सितः । प( व )टपत्रः कुठेरोऽन्यः पर्णासो बिल्वगन्धकः । पाठोस्यातीति पाठी । चेतति चित् चितो जन्तुस्त्रायते चित्रकः, नानारूपो वा । वह्निपर्यायो दीपनत्वात् । आह च– चित्रको दहनो व्यालः पाठीनो दारुणोऽग्निकः । ज्योतिष्को वह्नी वह्निः पाटी पाली कुटः शिखी ॥ ८० ॥ अर्काह्वोऽर्कपर्यायः । वसन्त्यस्मिंस्तेजो वसुकः । आस्फुटत्यास्फोटः । गणा बहवः ( बहूनि ) रूपाण्यस्य गणरूपः । विकिरति पुष्पाणि विकीरणः । मन्दानियर्ति मन्दारकः, मन्दा आरा अस्य वा । अर्काभानि पर्णान्यस्यार्कपर्णः । शुक्लोऽर्कोऽलर्कः, अलति भूषयतीति । प्रताप स्यति प्रतापसः, प्रकृष्टास्तापसा येन वा । आह च– अर्कः सूर्याह्वयः पुष्पी विदुरश्च विकीरणः । जम्भलः क्षीरपर्णः स्यादास्फोतो भास्करो रविः ॥ राजार्को वसुको व्यर्को मन्दारो गणरूपकः । एकाष्ठीलः सदापुष्पी स चालर्कः प्रतापसः ॥ ८१ ॥ शिवप्रिया

शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ।
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ॥ ८२ ॥
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता ।
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ॥ ८३ ॥
मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥ ८४ ॥
पाठाम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ।
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ॥ ८५ ॥
कटुः कटंभ( व )राशोकरोहिणी कटुरोहिणी ।
मत्स्यपित्ता कृष्णभेदा चक्राङ्गी शकुलादनी ॥ ८६ ॥

---

मल्लिका शिवमल्ली, उक्तं च– बुकं बिल्वं सधत्तूरं सुमना पाटला तथा । पद्ममुत्पलगोसूर्यमष्टौ पुष्पाणि शंकरे ॥ पशुपतेरयं प्रियो वा पाशुपतः । एकोऽष्ठीलो मज्जास्त्यस्य । वाति बुकः, बक इति प्राच्याः । वस्ते छादयति वसुः । आह च– वसुर्वसुक इत्युक्तः शिवार्क[ इक ] शिवशेखरः । महापाशुपतश्चैव सुव्रतः शिवमल्लिका ॥ [ जन्मवृक्षमत्ति नाशयति वृक्षादनी । वृक्षे रोहति वृक्षरुहा, वृक्षरोहेति वनेचराः ] । आह च– वन्दाकः स्याद्वृक्षरुहा शेखरी कामवृक्षकः । वृक्षादनी नगरुहा कामिन्यङ्घ्रिपरोहिणी ॥ त्र्यर्थे जीवन्ती गुडूची वृक्षरुहा शाकविशेषश्च ॥ ८२ ॥ वत्सानामदनं वत्सादनी । छिन्ना रोहति छिन्नरुहा । गुडति रक्षति गुडूची । तन्त्र्यते धारयत्यायुस्तन्त्रिका । जीवयति जीवन्तिका । सोमवल्ल्यमृतत्वात् । मधूनि पर्णान्यस्या मधुपर्णी । आह च– गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहामृता । छिन्नोद्भवामृतलता वरा वत्सादनी स्मृता ॥ सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा । जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता ॥ त्र्यर्थे विशल्या लाङ्गली दन्ती गुडूची च ॥ ८३ ॥ मूर्वति बध्नाति मूर्वा, अत एवास्या विकारो मौर्वी । मधुरो रसोऽस्या मधुरसा । मुरति संवेष्टयति मोरटा । तेजयत्यग्निं तेजनी । स्रवति रसं स्रवा, सुवेत्येके । मधूलिका माधुर्यात् । मधुनः श्रेणी पङ्क्तिर्मधुश्रेणी । गोकर्णी गोकर्णाभपत्त्रा, पाककर्णपर्णेति ( सू० ) ङीष् । पीलोरिव पर्णान्यस्याः पीलुपर्णी । आह च– मूर्वा मधुरसा देवी पृथुत्वक् पीलुपर्ण्यपि । स्व(मधु)श्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥ द्व्यर्थे तेजनी तेजोवती मूर्वा च । आहेन्दुः– स्निग्धच्छदा मधुश्रेणी पृथुत्वक्प्रसवाहिनी । स्वश्रेणी मधुमती सुरङ्गी द्विजमेखला ॥ आलोलनी योगवहा मोरटा च मधुस्रवा । सुयो[ रो ]पिता स्निग्धपर्णी गोकर्णी सा मधूलिका ॥ पीलुपर्णी कर्मकरी प्रमथा मधुमतीति च ॥ ८४ ॥ [ पठ्यते पाठा ] । विद्धौ कर्णौ यया विद्धकर्णी, शास्त्रे श्रूयमाणत्वात् । स्थापनी वस्तिकर्मोपयोगात् । रस्यते रसा । पापचेली पृथुलत्वात् । प्राचीभवा प्राचीना । वने तिक्तरसा वनतिक्ता । आह च– पाठाम्बष्ठाम्बष्ठकी च प्राचीना पापचेलिका । वृकतिक्ता वनेतिक्ता पापिका स्थापनी वृकी ॥ त्र्यर्थे रसा रास्ना सल्लकी पाठा च ॥ ८५ ॥ कटत्यावृणोति गलं कटम्भरा । शोकदन्तान् रोहत्यस्मात् शोकरोहिणी । कटुकरसत्वात् कटुका, मत्स्यानां पित्तं जीवनं वा । कृष्णो भेदश्छेदोऽस्याः कृष्णभेदा । शकुलानामदनं शकुलादनं शकुलादनी वा । आह च( निघण्टु )– कटुका मत्स्यशकुला मत्स्यपित्ता च रोहिणी । कृष्णभेदा काण्डरुहा रास्ना कटुकरोहिणी । अशोकरोहिणी तिक्ता चक्राङ्गी शकुलादनी । कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तरोहिणी ॥ द्व्यर्थे कटम्भरा कटुका कटुकी च ॥ ८६ ॥ आमना गुमा स्पर्शविषयत्वात् । न जहाति सङ्गानजहा । न विगताङ्गाव्यङ्गा । कण्डू

आत्मगुप्ताजहाव्यण्डा कण्डूरा प्रावृषायणी ।
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छूश्च मर्कटी ॥ ८७ ॥
चित्रोपचित्रा न्यग्रोधी द्रवन्ती शंबरी वृषा ।
प्रत्यक्श्रेणी सुतश्रेणी चण्डा मूषिकपर्ण्यपि ॥ ८८ ॥
अपामार्गः शैखरिको धामार्गवमयूरकौ ।
प्रत्यक्पर्णी के( की )शपर्णी किणिही खरमञ्जरी ॥ ८९ ॥
हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ।
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ॥ ९० ॥
मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषि( षी )का ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥ ९१ ॥

---

राति कण्डूरा । प्रावृषि भवा प्रावृषायणी । ऋष्यैर्मृगैः प्रोक्ता दर्शिता ऋष्यप्रोक्ता, ऋषिभिरप्रोक्ता इत्य-न्यादिलेके । शूकप्रधाना सकण्टका शिम्बिरस्याः शूकशिम्बिः । कपीन् कषति कपिकच्छूः । मर्कटी कपिरोमफलत्वात् । आहेन्दुः– ऋष्यप्रोक्ता स्वयगुप्ता कपिकच्छूश्च कण्डुरा । आत्मगुप्ता दुरालम्भा जाङ्गलिर्दुरभिग्रहा ॥ अव्यण्डा वृषभी शुना कण्डूरा शूकशिम्बिका । कपिरोमफला चैव सनाना प्रावृषायणी ॥ ज्ञेया जाङ्गलिका चैव साजहा प्रावृषायणी ॥ ८७ ॥ चित्रानेकवर्णपत्त्रा । न्यग्रोहति रुणद्धि वा बहुमूलत्वान्न्यग्रोधी । द्रवति द्रवन्ती । शं वृणोति शंबरी । वर्षति वृणोति वा वृषा । प्रतीची श्रेण्यस्याः प्रत्यक्श्रेणी । सुताना मूलाना श्रेण्यस्याः सुतश्रेणी । चण्ड्यते चण्डा । मूषिकपर्णी– आखु-कर्णीमपत्त्रा । आह च ( निघण्टु )– द्रवन्ती शंबरी चित्रा न्यग्रोधी मूषिकाह्वया । प्रत्यक्श्रेणी वृषा चण्डा पुत्रश्रेण्याखुपर्णिका ॥ द्रव्यर्थे– उपचित्रा दन्ती पृश्निपर्णी चेति, दन्त्या द्रवन्तीभ्रान्त्या मन्यद्रुप-चित्रामाह ॥८८॥ अपकृष्ट ( आ )समन्तान्मार्गोऽस्यापामार्गः, अप शुध्य(ध्या)त्यत्वाद् । शिखरे भवः शैखरिकः । अधमं मार्ग वाति धामार्गवः, धाम अर्जति वा । मयूरप्रतिकृतिर्मयूरकः । प्रत्यञ्चि पर्णान्यस्याः प्रत्यक्पर्णी । केशपर्णी कपिलैनत्वात्, अत एव केशवल्लीत्येके । किणिनो जिहीते याति किणिही, सर्वाङ्किणोत्पादनात् । आह च– अपामार्गस्तु शिखरी प्रत्यक्पुष्पी मयूरकः । अथ-शल्याय किणिही दुर्ग्रहः खरमञ्जरी ॥ स एवोक्त शैखरिको मर्कटी दुरभिग्रह । पत्त्रपर्णी च शिखर कूटो मर्कटपिप्पली ॥ द्रव्यर्थे धामार्गवोऽपामार्गः कोशातकी च ॥ ८९ ॥ हन्ति रोग हञ्जी । ब्राह्मणी पवित्र-त्वात् । पद्मा पद्मामपुष्पा । भृज्जति भार्गी, भृगुजेत्येके, अत एव भार्द्वी । अङ्गाराभा वल्ल्यस्याः अङ्गारवल्ली । बालेयशाको गर्दभभोग्यत्वात् । वृणोति बर्बरः बर्बरश्च, बर्बरकृतिश्चो वा । आह च– भार्गी गर्दभशाकश्च पद्मा ब्राह्मणयष्टिका । अङ्गारवल्ली हञ्जी च वर्चो बर्बरकस्तथा ॥ द्रव्यर्थे ब्राह्मी सूक्ष्मा भार्गी च । आहेन्दुः– ब्रह्मरीतिस्तया सूक्ष्मा भार्गी च ब्राह्मणी मता ॥९०॥ मञ्जौ मनोज्ञे वर्णे तिष्ठति मञ्जिष्ठा, अम्बाम्बगोभूमीति (सू०) षत्वम् । विकसति दूर विकसा । जिङ्गति प्रसरति जिङ्गी । समन्ततोऽङ्गति समङ्गा । काले भिष्य(ष्य)ते शष्यते कालमेषी(षी) । मण्ड्यते मण्डीरी मण्डा च । योजनवल्ली दूरसरा । आह च (निघण्टु )– मञ्जिष्ठा कालमेषी च समङ्गा विकसारुणा । मण्डूकी रक्तयष्टिश्च मण्डी योजनवल्ल्यपि ॥ आ-हेन्दुः– विकषा कालमेषी तु कालगोष्ठी च जिङ्गिका । रक्ता भण्डीरिका चेति– ॥९१॥ याति प्रसराति

यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।
रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा ॥ ९२ ॥
पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ।
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ॥ ९३ ॥
निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ।
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ॥ ९४ ॥
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।
रञ्जनी श्रीफला तुत्था द्रोणी दोला च नीलिनी ॥ ९५ ॥
अवल्गुज सोमराजी सुवल्लि सोमवल्लिका ।
कालमेषी कृष्णफला वाकुची पूतिफल्यपि ॥ ९६ ॥

---

यास । यौति यवास । दुःस्पर्शः कण्टकित्वात् । धन्वयासो मरुद्भवत्वात् । कुं नाशयति कण्टकित्वात्कुनाश । रोदयति खेदयति रोदनी, चोदनीति सभ्या । कच्छूं रोगं राति कच्छुरा । अनन्ता समुद्रान्ता च दुरन्यासे । कृच्छ्रेण लभ्यते दृश्यते दुरालभा । आह च- यासो यवासकोनन्ता बालपत्रो विरञ्जक । चीरमूल समुद्रान्तो दीर्घमूलो मरुद्भव ॥ धन्वयासो दुरालम्भ ताम्रमूली च कच्छुरा । दुरालभा च दुःस्पर्शा यासो धन्वयासक ॥ ९२ ॥ पृश्नि चित्रगर्भेव पर्णं यस्याः पृश्निपर्णी, सश्मपर्णी वा, यदाह पृश्निरल्पतनौ । अङ्घ्रेर्बुध्नादारभ्य पर्णं यस्या अङ्घ्रिपर्णी । क्रोष्टुर्निर्विन्ना दत्तव, क्रोष्टुपुच्छीत्वात् । सिंहस्येव पुच्छमस्य सिंहपुच्छ शाकोरया सिंहपुच्छक । कलशिर्गौरी पृथुलत्वात् । धावति प्रसरति धावनि । गूहति रसं गुहा । आह च- पृश्निपर्णी पृथक्पर्णी कलशिर्धावनी गुहा । शृगालविन्नापृ( ङ्घ्रि )तिलपर्णी क्रोष्टुकपुच्छिका ॥ ९३ ॥ निदिह्यते निदिग्धिका । स्पृशति कण्टकै रुपतपति स्पृशी । व्याघ्री हिंस्रत्वात् । कण्टकबहुलत्वाद् बृहती । कण्टकानियर्ति कण्टकारी । प्रचोदयति कण्टकै प्रेरयति प्रचोदनी । कलति कुली । क्षुणत्ति क्षुद्रा हिंसा, क्षुद्रतानयेरदेशो वा । राष्ट्रमस्त्यस्या राष्ट्रिका । बहती तु निदिग्धिकेति भागुरिविश्वयद्रव्यकृद भ्रान्त यतोनयोर्नेह भेद । आह च- कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका । कण्टालिका कण्टकारी धावनी द्रव्यपंगति ॥ यथा- बृहता सिंहमाकान्ता वार्ताकी राष्ट्रिका कुली । विशदा स्थूलभण्टाका महती तु महोटिका ॥ भागुरिर्हि द्वयार्थे हती रमन्यत यच्छाश्वत - क्षुद्रया क्षुद्रवार्ताक्या बृहती छन्दसि क्वचित् । द्वयर्थे प्रचोदनी कण्टकारिका दुरालभा च ॥ ९४ ॥ नीली काला च वर्णे, नीलाद्याप्योषध्यादिषु ( वा० ) । क्लीतक निमिमयोस्तस्या क्लीतकिका । ग्रामे भवा ग्रामीणा । रञ्जयति नालं करोति रञ्जनी । श्रीफला रम्यफला । तुथते तुत्था । द्रवत्यस्या स्पर्शाज्जनो द्रोणी, तणीत्येके । दोल्यते दोला भेकेत्यन्ये । नीलोऽस्त्यस्या नीलिनी । आह च- नीलिनी नीलिका काला ग्राम्या तूणी विशोधनी । तुत्था श्रीफलिका मेला सारवाही च रञ्जनी ॥ त्र्यथ मधुपर्णी गुडूची कश्मरी नलिका चेति, द्वयर्थे क्लीतकिका मधुयष्टी नीलिका च ॥ ९५ ॥ अवगोरम्याज्जातावल्गुज । सोमेन छन्दनेन राजते सोमराजी । कालेन मिष्यते शब्दयते कालमेषी कृष्णफलत्वात् । वातं सङ्केचयतीति विचनाद्वाकुची । पूति फलमस्या पूतिफली, पाककृणोति ( सू० ) ईप् । त्र्यर्थे कालमषी मञ्जिष्ठा बृहती वाकुचिका च ॥ ९६ ॥ कर्षति कृष्णा, श्यामलत्वाद्वा ।

कृष्णोपकुल्या वैदेही मागधी चपला कणा ।
ऊपणा पिप्पली शौण्डी कोलाथ करिपिप्पली ॥ ९७ ॥
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ।
चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला ॥ ९८ ॥
पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥ ९९ ॥
विश्वा विषा प्रतिविषातिविषोपविषारुणा ।
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे ॥ १०० ॥
शतमूली बहुसुताभीरुरिन्दीवरी वरा( री ) ।
ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी ॥ १०१ ॥

---

उपकोलति सस्त्याभत्युपकुल्या । विदेहदेशे भवा वैदेही । मगधभवत्वान्मागधी । चपति चपला । कणाः सन्त्यस्या कणा । ऊपत्यूपणा, ऊप रुजायाम् । उपणापि, उप दाहे, तीक्ष्णतण्डुलत्वात् । पिपर्ति पिप्पली । शौण्डी शक्तत्वात् । कोला, कुल संस्याने । आह च– पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला । उपकुल्या कणा श्यामा कोला शौण्डी तयोपणा ॥ इन्दुश्च– पिप्पली तण्डुलफला वैदेही कृष्णतण्डुला । करिपिप्पली बृहत्त्वाद् गजयोग्या वा ॥९७॥ कपिवल्ली मर्कटरोमत्वात् । एवं कोलवल्ली । वस्यते छाद्यते रोमभिर्वशिरः । चव्यं, फल चैतत्, चव्यते चव्यं च्यवते वा । आह च– चविका कोलवल्ली तु चव्यं चवनमेव च ॥ तस्याः फल विनिर्दिष्टं श्रेयसी हस्तिपिप्पली ॥ **चन्द्रनन्दनः** सामान्येनाह चव्या कोला च चविका श्रेयसी गजपिप्पली । चवना कोलवल्ली तु चव्यं कुञ्जरपिप्पली । त्र्यर्थे मर्कटवल्ली– अपामार्गो हस्तिपिप्पली स्वयंगुप्ता चेति, तथा वशिरोऽपामार्ग समुद्रलवण हस्तिपिप्पली चेति । काकवर्णा चिञ्ची प्रान्तोऽस्याः काकचिञ्ची । गुञ्जति शिम्ब्या गुञ्जा । कृष्ण प्रान्त लाति कृष्णला । रक्तिकापि ॥ ९८ ॥ पलं मांसं कषति पलंकषा । इक्षोरिव गन्धोऽस्याः स्वादुकण्टकत्वादिक्षुगन्धा । शुनो दंष्ट्रेव हिंस्रत्वाच्छ्वदंष्ट्रा । गवा कण्टको वेधको गोकण्टको गोक्षुरत्वात् । गौर्महीनि तु युक्त, अत एव वनशृङ्गाटो भूक्षुरश्चायम् । आह च– गोक्षुर स्याद गोक्षुरको भक्षकः स्वादुकण्टकः । गोकण्टको भक्षक[ ट ]कः पडङ्ग क्षुरकः क्षुरः ॥ गोकण्टो गोक्षुरः कण्टी षडङ्गस्त्रिकगस्त्रिक । त्रिकण्टकः कष्टफलः श्वदंष्ट्रव्यालदंष्ट्रकः ॥ त्र्यर्थे पलंकषो लाक्षा गोक्षुरो गुग्गुलुश्च, तथा– इक्षुगन्धा विदारी कोकिलो गोक्षुरश्च ॥९९॥ विशत्यन्तर्विश्वा । वेवेष्टि विषा । प्रतीपा विषस्य प्रतिविषा, अगदत्वात् । शृङ्गयुक्तत्वाच्छृङ्गी । आह च– अतिविषा शुक्लकन्दा ज्ञेया विश्वा च मङ्गुरा । श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा[ तथा ] ॥ महौषधं तु विषं नातिविषा । त्र्यर्थे तु हि महौषध ( विषं ) शुण्ठी लशुन चेति विषा(प)शब्द शुद्ध भ्रान्तोऽयम् । क्षीरमवति क्षीरावी । दुग्धमस्त्यस्या दुग्धिका क्षीरकाकोलीयम् । आह च– द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी । पयस्या [ वयस्था ] क्षीरमधुरा वीरा क्षीरविकारिका । अत्र क्षीरावी विकारिकेति च भ्रन्यक्रन्मन्यते, क्षीरेति विकारिकेति तु वैद्याः ॥ १०० ॥ शतं बहूनि मूलान्यस्याः शतमूली । बहुधा सुवति बहुसुता । अभीरुः स्थिरपत्रा रसायनत्वाद्वा । इन्दीवर्युत्पलपुष्पा । वृणोति वरा । ऋष्यै प्रोक्ताश्रिता द्वीपिशत्रुत्वात् । नारायणी विष्णुजाता । शतेन वृणोति शतावरी । न हि नीलहेतु, अभीरोरपभ्रंशोऽयं वा । हरमेखलो निघण्टौ दृष्ट, यदाह– सहस्रमूली सहस्रावरी– अहेरुरिति । आह च– शतवीर्या शतपदी पीवरीन्दीवरी वरी । सहस्रवीर्याऽभीरुश्च तुङ्गिनी बहुपत्रिका ॥ ऋष्यप्रोक्ता द्वीपिशत्रुर्दी[ द्वी ]पिका वरकण्टक. । मता पुष्पदन्ता च शतावर्यूर्ध्वकण्टकः ॥ १०१ ॥ कालयति दोषान्कालीयकः ।

अहेदरथ पीतद्रुकाली( ले )यकहरिद्रवः ।
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ॥ १०२ ॥
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ।
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ॥ १०३ ॥
वृषोटरूपः सिंहास्यो वासको वाजिदन्तकः ।
आस्फोता गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता ॥ १०४ ॥
इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ।
शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ॥ १०५ ॥
मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक् स्त्री स्नुही गुडा ।
समन्तदुग्धाथो वेल्लममोघा चित्रतण्डुला ॥ १०६ ॥
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ।
व-च-ला वात्यालको घण्टारवा तु शणपुष्पिका ॥ १०७ ॥

---

हरिः पीतो द्रुः स्कन्धोऽस्य हरिद्रुः । दार्वी दारुहरिद्रा च पिण्डहरिद्रातोऽन्या । अत्यर्थं पचति पचंपचा । पिपर्ति रोगेभ्यः पर्जनी । आह च– हरिद्रा पीतिका पिण्डा रजनी रञ्जनी निशा । गौरी वर्णवती पीता हरिता[ द्रा ] वरवर्णिनी ॥ अन्या दारुहरिद्रापि हरिद्रुः पीतचन्दनम् । निर्दिष्टा वै कटङ्किनी स च कालेयकः स्मृतः ॥ कालीयको दारुनिशा दार्वीपीतद्रुपीतकाः । कटङ्कटेरी पर्जन्या पीतदारु पचंपचा ॥ १०२ ॥ वक्त्यनया वचा, वाक्पाटवकृत् । षड् ग्रन्थयः पर्वाण्यस्याः षड्ग्रन्था । गोरिव लोमान्यस्या लोमशत्वाद् गोलोमी । शुक्ला कृष्णा च द्विधा, यदाह– वचोग्रगन्धा गोलोमी जटिलोग्रा च लोमशा । अन्या श्वेतवचा मेध्या षड्ग्रन्था हैमवत्यपि ॥ द्व्यर्थे शतपर्वा दूर्वा वशा वचा च । वैद्यानां मातेव रोगजित्त्वात् । हिनस्ति रोगान् सिंही । उश्यते काम्यते वाशिका ॥ १०३ ॥ वर्षति मधु वृषः । अटान् गच्छतो रूपस्यटरूपः । सिंहास्याकारपुष्पत्वात्सिंहास्यः । वाजिदन्ता इव केसराण्यस्य वाजिदन्तकः । आह च– वासकः सिंहपर्णी च वृषो वासोथ सिंहिका । अटरूपः सिंहमुखी भिषङ्मातारूपकः ॥ आस्फुटत्यास्फोता । गिरि( रे )रश्मवत्कर्णिकास्य( स्या ) गिरिकर्णी । विष्णुनाक्रान्ता । अत एव रक्षाहेतुत्वान्न पराजिता । आह च– अश्वक्षुरा श्वेतपुष्पा श्वेता च गिरिकर्णिका । कटभी श्वेतसारा च श्वेताख्या चापराजिता ॥ द्व्यर्थे आस्फोता सारिवा गिरिकर्णिका च ॥ १०४ ॥ इक्षोरिव गन्धोऽस्याः, स्वाद्वीत्यर्थः । इक्षुसदृक्काण्डत्वात् ( काण्डेक्षु ) । कोकिलस्येवाक्षिण्यस्य कोकिलाक्षः । इक्षु रातीक्षुरः । स एव लोकोक्त्या क्षुरः, पारुष्याद्वा । आह च– तथान्य इक्षुगन्धः स्यादिक्षुरः कोकिलाक्षकः । कामः[ सः ] काण्डेक्षुरुद्दिष्टः कांकेक्षुर्वायसेक्षुकः ॥ शालायां भवः शालेयः, गुप्तत्वात्, अत एव शालीनः । शीतः शिवश्च । ( छत्रा ) छत्रातपत्रा । मस्यति परिणमति मिसिः । आह च– मिश्रेया तालपत्री च तालपर्णी मिसिस्तथा । शालेयः स च शालीनो नाम्ना शीतशिवो मतः ॥ १०५ ॥ सीहुण्डः सिंहतुण्डापभ्रंशः, यन्मेखलाकुलिशतरू सीहुण्डो । वज्रो भेदकत्वात् । स्नौ( स्नुह्य )ति क्षीरं स्नुक् स्नुही च, स्नुहेति वैद्याः । गुडा वृत्तत्वात्, गुहेत्यपपाठः, यच्छाश्वत– गुडो गोलेक्षुविकृती स्नुही गुडिकयोर्गुडा । सुधापि । आह च– स्नुक् सुधा च महावृक्षो गुडा निस्त्रिंशपत्रकः । समन्तदुग्धा गण्डीरा सीहुण्डो वज्रकण्टकः ॥ वज्रद्रु. स्नुक् स्नुहीत्येके पेठुः । वेल्लति वेल्लम् ॥ १०६ ॥ बिलति भिनत्ति विडङ्ग विलङ्गति वा । आह च– विडङ्गा जन्तुहन्त्री च कृमिघ्नी चित्रतण्डुला । तण्डुलः कृमिहामोघा केश[ केस ]ला मृगगामिनी ॥ बलन्त्यनया बला, बलकृद्वा । वदति वात्यालकः । चन्द्रनन्दनो बला भद्रौदनी ह्या तथा वात्यालक इत्याह । घण्टेवारौति घण्टारवा । शणस्येव पुष्पाण्यस्याः शणपुष्पी, पाककर्णपर्णेति ( सू० ) ङीप् । आह च– शणपुष्पी बृहत्पुष्पी स चोक्तः शणघण्टकः ॥ १०७ ॥ मृद्वीका सौकुमार्यात् । गोस्तनामा

मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ।
सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥ १०८ ॥

त्रिभण्डी रोचनी श्यामापालिन्द्यौ तु सुषेणिका ।
काला मसूरविदलार्धचन्द्रा कालमेषिका ॥ १०९ ॥

मधुकं क्लीतकं यष्टीमधुकं मधुयष्टिका ।
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता ॥ ११० ॥

अन्या क्षीरविदारी स्यान्महाश्वेतर्क्ष्य(र्क्ष)गन्धिका ।
लाङ्गली शारदी तोयपिप्पली शकुलादनी ॥ १११ ॥

खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ।
गोपी श्यामा शारिवा स्याच्चन्दनोत्पलशारिवा ॥ ११२ ॥

---

गोस्तनीति विशेषोपि सामान्यवृत्तिः । द्राति सरसत्वाद् द्राक्षा । आह च– द्राक्षा नाडफला कृष्णा पियाला कालमेषिका । स्वाद्वी गुडा मधुरसा मृद्वीका गोस्तनी स्मृता ॥ हारहूरा च । सर्वो अनुभूनयोस्याः सर्वानुभूतिः, नानारसेत्यर्थः । सरति सरला विरेचनीत्वात्, सरलेत्येके । त्रयः पुटाश्छादका अस्यास्त्रिपुटा, त्रिपुटी च, त्र्यस्रेत्येके । त्रिभिर्विवने त्रिभिर्वर्त्यते छाद्यते वा त्रिवृता त्रिवृत्, त्रिपुटात्वाद्वा ॥ १०८ ॥ त्रिभिर्भण्डयत उद्भाव्यते त्रिभण्डी । रोचनी रुचिकर्त्री, रेचनीत्येके । शुक्लेयं, कृष्णामाह । पालयति पालिन्दी । सुपिप्पोनि सुषेणी । आह च– श्यामा त्रिवृन्मालविका मसूरविदला च सा । कालार्धचन्द्रा पालिन्दी सुषेणी कालमेष्यपि ॥ शुक्ला चापि त्रिभण्डास्यात्काकक्षी सरला त्रिवृत् । सर्वानुभूतिस्त्रिपुटा श्वसा कूरवृंहिणी ॥ आम्मसी रेचनी चैव कण्टविक्षोभणी तथा ॥ १०९ ॥ यष्टीरूपं मधुकं यष्टीमधुकम् । एकदेशान्मधुरम् । क्लीबत्व तकति प्रतिहन्ति वृष्यत्वात्क्लीतकं, क्लीतसंज्ञं वा । आह च– मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा । यष्टीमधुक मधुक यष्ट्याह्व मधुयष्टिका ॥ तल्लक्षण क्लीतक च– इति । विदार्य भक्ष्यते विदारी । क्षारेण शुक्ला । इक्षुगन्धा माधुर्यात्, क्षीरविदारीम कृष्णो भूकूष्माण्डोयं वा [प्राक्षु देशेषु] । शुक्ले भूकूष्माण्डः सृमाली, रस सृजतीति, क्रोष्टी तु लक्षणया । आह च– विदारिका मता शुक्ला स्वादुकन्दा सृगालिका । कृष्णगन्धा विदारी न कृष्यवल्ली विदारिका ॥ स्पर्शे– इक्षुगन्धा विदारी कोकिलाक्षको गोक्षुरश्च ॥ ११० ॥ ऋष्यान्गन्धमपस्पर्दयति ऋष्यगन्धा । आह च– अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुगन्ध्यपि । क्षीरवल्ली क्षीरकन्दा क्षीरशुक्ला पयस्विनी ॥ स्पर्शे महाश्वेता नीलस्यन्दा यवशर्करा क्षीरविदारी च, तथा ऋष्यगन्धा मूलक रक्त लुक क्षीरविदारी च, तथा क्षीरशुक्ला क्षीरविदारी क्षीरकाकोली नीलस्यन्दा च । लाङ्गली हलाकारा । शकुलादनी मत्स्यभक्षणात् । आह च– जलपिप्पल्यभिहिता शारदी तोयपिप्पली । मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥ १११ ॥ खरमश्नुते खराश्वा । कारोरियं कारवी कर्मण्येत्यर्थः । दाप्योमदीपन । मीनात्यग्निमान्द्यं मयूरः । लोच्यते लुच्यते वा मस्तकोस्य दर्वीकारत्वाल्लोचमस्तक, लोचमर्कट इत्येके । आह च– अजमोदा वस्तमोदा दीप्यको लोचमस्तक । खराश्वा कारवी वल्ली मोचा हस्तिमयूरकः ॥ स्पर्शे मयूरकोरामार्गोजमोदा तु वक्त्रम् । गोपायति गोपी । (श्या.मा)श्यामवर्णा । यच्छाश्वत – शारिवायां निशि श्यामा श्यामौ च हरितासितौ । शीर्यमनेनया दोषा शारिवा । चन्दनाच्छादनत्वात्, अनन्तेत्येके । उत्पलाभपन्नोत्पलशारिवा । आहुश्च– शारिवा फणिजिह्वा च गोप्यास्फोता च चन्दना ॥ ११२ ॥ योजनीय योगे साधु वा योग्यम् । ऋध्नोति ऋद्धि । वृद्धेरोषधिविशेषस्यापि योग्यादीनि नामानि । आह च– ऋद्धिर्वृद्धि सुखं सिद्धी श्याद्गां मङ्गल वसु । ऋद्धियुग्मं [ सृष्टा ] युगं योग्य लक्ष्मी- सर्वजनप्रिया ॥ केन वायुना दश्यते कदली । वारणानां वुरोघात, वारणा(वु)सेत्येके । रम-

योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ।
कदली वारणवुसा रम्भा मोचांशुमत्फला ॥ ११३ ॥
काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ।
वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ॥ ११४ ॥
नाकुली सुरसा नाग(रास्ना)सुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ॥ ११५ ॥
विदारिगन्धांशुमती शा( सा )लपर्णी स्थिरा ध्रुवा ।
तुण्डिकेरी समुद्रान्ता कर्पासी बदरेति च ॥ ११६ ॥
भारद्वाजी तु सा वन्या शृङ्गी तु वृ-ऋ-षभो वृषः ।
गाङ्गेरुकी नागबला झषा ह्रस्वा गवेधुका ॥ ११७ ॥
धामार्गवो घोषकः स्यान्महाजाली स पीतकः ।
ज्यौत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ॥ ११८ ॥

---

तेस्या रम्भा । मुञ्चति रस मोचा । अंशुमानिव फलान्यस्या अंशुमत्फला, भानुफलाख्या ॥११३॥ ईषदष्ठीलमस्याः काष्ठीला, काष्ठी[ ष्ठी ]रस इत्येके । आह च ( धन्वन्तरिः )– कदली सुकुमारा च रम्भा भानुफला मता । क ष्णी[ ष्ठी ]रसश्च नि.सारा मोचा हस्तिवि(षु)षा तथा ॥ सहा क्षुद्रा, सहाख्यात्र । त्र्यर्थे हि सहा मुद्गपर्णी बला नाकुली च, यतो महासहा माषपर्ण्युच्यते । वार्ताकं देश्याम् । भण्टाकी कण्टकार्या अन्येयमित्यत्र मन्यते, वैद्यास्त्वभिन्ना प्राहुः, यदाह– हिङ्गुली बृहतीति च ॥ ११४ ॥ नकुलानां प्रिया नाकुली । नागसुगन्धा सर्पसुगन्धत्वात् । छत्राकी छत्राभपर्णी । सुष्ठु वहत्यामोदं सुवहा । अर्धेन रास्नार्धेन सर्पाक्षीति गौडाः, वैद्यास्तु नाकुलीगन्धनाकुल्यौ विदारीक्षीरविदारीवद् भिन्ने मन्यन्ते । आह च– नाकुली सर्पगन्धा च सुगन्धा भोगिगन्धिका । सैव सर्पसुगन्धेति– । तथा– अन्या महासुगन्धा च सुवहा गन्धनाकुली । सर्पाक्षी नकुलेष्टा च छत्राकी विषमर्दनी ॥ ११५ ॥ विदार्या गन्धोस्या विदारिगन्धा । अंशवः सन्त्यस्या अंशुमती दीर्घमूलत्वात् । शालस्येव पर्णान्यस्याः शालपर्णी । आह च– शालपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा । विदारिगन्धांशुमती दीर्घमूला च पीतनी ॥ तुण्डिकान् गन्धादीनीरयति कम्प्राक्रिवातुण्डिकेरी । समुद्र. कम्प्रके कृतरक्षोन्ते स्याः समुद्रान्ता, दूरप्रसरत्वाद्वा । कल्पते कर्पासी । बदराणीव फलानि सन्त्यस्या बदरा, यन्माला– कर्पासो बदरः प्रोक्तो बादरः पिचवश्च ह । त्र्यर्थे तुण्डिकेरी चिवा कर्पासो च, त्र्यर्थे समुद्रान्ता कर्पासी यवासकः स्पृक्का च ॥ ११६ ॥ वने भवा वन्या । सा कर्पासी । ( भारद्वाजी )भरद्वाजसंज्ञेत्यागम. । भद्रापि । शृङ्गाणि सन्त्यस्य शृङ्गी । अत एव वृषाख्यः । आह च– ऋषभो धूर्वहो धो[ धी ]रो म तृको वृषभो वृषः । विताना ककुदिन्द्राक्षो बन्धुरो गोपति स्मृतः ॥ गाङ्गमीरयति पवित्रत्वात् गाङ्गेरुकी । नागानां बलं यस्या नागबला । झषति हिनस्ति गन्धेन झषा । गवि जले–इन्द्धे ( एधते ) गवेधुका । आह च– गाङ्गेरुकी नागबला खरगन्धनिका झषा । विश्वदेवा तथारिष्टा ग[ च ]ण्डा ह्रस्वा गवेधुका ॥ ११७ ॥ धामार्जीति धामार्गवः । घोषति शब्दायते घोषक । स धामार्गवः पीतपुष्पो महाजाली, जाल वितानः । आह च– धामार्गवः कोशातकी राजकोशातकी फला । कर्कोटकी पीतपुष्पा महाजाली तथोच्यते ॥ ज्योत्स्ना रात्रौ भासनात् । पटति विस्तीर्यते पटोली । जाली सवितानाः । ऐरावतो नागरङ्गो नादेयी भूमिजम्बुकेत्युक्तत्वापि भ्रान्त्या प्रोक्ता ॥ ११८ ॥ लाङ्गलवद् भेदनाल्लाङ्गली । अग्निशिखा इस्तुभावयत्वात्, अग्निमुखीत्येके । आह च– कलिकारी तु फलिनी विशल्या गर्भपातनी । लाङ्गल्यग्निमुखी गौरी दीप्तानन्तेन्द्रपुष्पपि ॥ द्व्यर्थे– अग्निमुखी भल्लातकी लाङ्गली च । काकस्येवाङ्गं नासाग्रं फलमस्याः काकाङ्गी, काकजङ्घेत्येके ।

स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ।
गोधापदी तु सुवहा मुसली तालमूलिका ॥ ११९ ॥
अजशृङ्गी विषाणी स्याद् गोजिह्वादार्विके समे ।
ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा ॥ १२० ॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ।
एला ल-वालुकमलेय सुगन्धि हरिवालुकम् ॥ १२१ ॥
वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ।
वाल ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ॥ १२२ ॥
कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ।
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ॥ १२३ ॥
गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ।
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ॥ १२४ ॥

---

आह च– काकनामा ध्वाङ्क्षनामा काकतुण्डफला च सा । गोधाया इव पदान्यस्या गोधापदी, कुम्भपद्यादि (सू० ) । हंसपदी च । मुष्णा( स्य )ति खण्डयति दोषान्मुसली । द्वयर्थे तालपत्री मुसली मिश्रेया च ॥ ११९ ॥ अजस्येव शृङ्गाण्यस्या अजशृङ्गी, कर्कटशृङ्गीयर्थ । विषाणी शृङ्गित्वात् । आह च– शृङ्गी कर्कटशृङ्गी च कुरङ्गी कर्कटाह्वया । कुलीरशृङ्गी वक्रा च महाघोषा नताङ्ग्यपि ॥ गोजिह्वामपत्रा । दारयति रागान् दार्वी, ओषधिविशेष । नागवल्ली फणिलता पातालानीतत्वात् । द्विजं दत्ते द्विजा ॥ १२० ॥ हरति हरेणु । रेणुका भस्मयोगात् । कुन्त्या दुर्वाससा दत्ता कौन्ती । भस्मना धूल्या गन्धयति भस्मगन्धिनी । आह च– रेणुका राजपुत्री च नन्दिनी कपिला द्विजा । भस्मगर्भा पाण्डुफला भस्मगन्धा हरेणुका ॥ गन्धद्रव्यं चैतत् । एला-ल-वद्वलति– एला-ल-वालुकम् । हरी पिङ्गा वालुक हरिवालुकम् । द्वयर्थे सुरभि सल्लकी मुरा– एलवालुका च ॥ १२१ ॥ पाल्यते पालङ्क्या । मुक्तात्कुन्द इव मुकुन्द, मुचति रस वा । कुन्दयति कुन्दुरु । आह च– कुन्दुरु स्यात्कुन्दुरुक कुन्दयाश्चो विट्[द्]-खदिरम्यपि । मुकुन्दस्तु सुगन्धश्च पालिन्दे (लङ्क्यो )भीषणो वली ॥ वलते वालम् । जिहेति च ह्रीबेरम् । वर्हते वर्धते वर्हिष्ठम् । उदीचीभवमुदीच्यम् । केशपर्याय वालत्वात् । अम्बुनाम तृड्घ्नत्वात् । आह च– वालकं वारि तोय च ह्रीबेर जलमम्बु च । केश वज्रमुदीच्य च पिङ्गामरवचन वचम् ॥ १२२ ॥ कालमनुसरति शीतोष्णाभ्यां कालानुसार्यम् । वृद्ध कालस्थायि । अश्मन पुष्प, अश्मान पुष्णाति वा, तद्रूपं पत्वात् । शीतत्वेन शिव शीतशिवम् । द्वयर्थे शीतशिव सैन्धव मिश्रेया चेत्यदु । तानि तु शैलेय, शिलायां भव शैलेयम् । आह च– शैलेय पलित वृद्ध जीर्ण कालानुसार्यकम् । स्थविरं च शिलादद्रु शिलापुष्प शिलाभवम् ॥ दैत्या सुराभ्यदैत्यनामत्वात् । ( मुरा ) मुर संवेष्टने । आह च– मुरा गन्धवती दैत्या गन्धकुटी तपस्विनी । सुरभि सुरगन्धा च कुटी गन्धकुटी स्मृता ॥ १२३ ॥ गजैर्भक्ष्यते गजभक्ष्या । सु वहति सुवहा, सुस्रवोति वैद्याः । महद्वेरणमस्या महेरणा । सल्लन्ति लवते स्वादते गजे सल्लकी [शल्लकी] । ह्लादयति ह्लादिनी । आह च– सल्लकी शल्लकी ह्लादा सुरभि सुस्रवा रसा । अश्वमूत्री कुन्दुरुकी गजभक्ष्या महेरणा ॥ १२४ ॥ अग्रेणालिप्त रक्त, मयशाखर्नि वहा । सुभिक्ष सुमत्स्या । धनुरस्या धानुष्की, धनुर्धार्यत्वात् । आह च– धनुर्दा ताम्रपुष्पी च कुष्ठा नदकान्ती । पारिन्दका सुभिक्षा च पटिका च शिखिका । पृथ्वीका बहुफला पलैला । एव बहुग । चाम्पय कपूरक पत्रा सुगन्ध पत्तकाप्र । स्पदते सुगन्धीरम्य दम्येका । निष्कान्ता कुटा कटा निकुटि । आह च– पलेर्वा कुटदेटा च निशिला निशिवेल्लका । स्थूलैला रक्तसुगन्धा च पृथ्वीका चन्द्रकन्दका ॥ निषु(ष्कु)टि स्थूलम् । स्थूले

अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ।
पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुलाथ सा ॥ १२५ ॥
सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रपुटा त्रुटिः ।
व्याधिः कुष्ठं पारिभ(मा)व्यं वाप्यं पाकलमुत्पलम् ॥ १२६ ॥
शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः ।
झटामलाज्झटा ताली शिवा तामलकीति च ॥ १२७ ॥
प्रपौण्डरीकं पुण्डर्यमथ तुन्नः कुबेरकः ।
तुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी ॥ १२८ ॥
चण्डा धनहरी क्षेमदुष्पु( ष्प )त्रगणहासकाः ।
व्यालायुधं व्याघ्रनखं करजं चक्रकारकम् ॥ १२९ ॥
सु( शु )षिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ।
धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ॥ १३० ॥

---

पृथ्वीका हिङ्गुपत्रिकोपकुञ्चिका सूक्ष्मैला चन्द्रवालाः । द्वयर्थे तु त्रिपुटा त्रिवृत्सूक्ष्मैला चेति लक्ष्याच्चामेव विनिश्चयः ॥ १२५ ॥ सा- एला सूक्ष्मा, उपकुञ्चत्युपकुञ्चिका । तुत्था चालनात् । कुरति शब्दायते कोरङ्गी । त्रिपुटा त्र्यस्रि । त्रुट्यति त्रुटिः सूक्ष्मत्वाद्वा । आह च- सूक्ष्मैला द्राविडा तुत्था कोरङ्गी बहुला त्रुटिः । एला कपोतवर्णा च चन्द्रवाला च निष्कुटिः ॥ द्वयर्थे त्रिपुटा त्रिवृत्सूक्ष्मैला च । व्याधिपर्यायं कुष्ठत्वात् । कौ तिष्ठति कुष्ठम्, अम्बाम्बगोभूमी ति ( सू० ) षत्वं, कुष्णाति रोगान्वा । पारिषु तोयाशयेषु भवति पारिभव्यं, मन्यगयति ( सू० ) साधु । वाप्यां भवं वाप्यम्, व्याप्यमित्येके । पाकलं व्याधिन्वात्, पाकं लाति वा । उत्पलं दाहहरत्वादुत्पलपुष्पत्वाद्वा । आह च- कुष्ठं रोगो गदो व्याधिरुत्पलं पाकलं रुजा । वाप्यं वानीरजं राम कौबेरं पारिभव्यकम् ॥ १२६ ॥ शङ्खिनी शौक्ल्यात् । चोरपुष्पी धनहरीत्वात्, रक्तो विकाशाद्वा । कशा सन्त्यस्याः केशिनी । चन्द्रनन्दनोक्त- चण्डा धनहरी चौरी चोरपुष्पा च तस्करी । तथा निशाचरी च स्यात्केशिनी ग्रन्थिकत्यपि ॥ वितुद्यन वितुन्नकः । झटा रुधानास्या झटा । आमला- आमलकीवत् । अजझटार्थमेकाभिधाना, अद् आश्चर्ये द्रुमुतवत् । ताडयति मलास्ताडी( ली ) । अमलकं लाञ्छितं । ताम्यति तामलकी । आह च- तामलक्युत्तमा ताली तमल( क )त पुत्रापिनी । वितुन्नकस्तत्वन्यद्य च झटा चामलकीति च ॥ १२७ ॥ प्रकर्षेण पुण्डरीकस्येदं दाहहरत्वात्प्रपौण्डरीकम् । अस्यैकदेशानुकारात्के पुण्डर्यम् । आह च- प्रपौण्डरीकं चक्षुष्यं पौण्डर्यं पुण्डरीयकम् । स्थलपद्ममिति गौडाः । तुद्यते तुन्नः । कुबेरः कुत्सितदेहः । अत एव तुणिस्थाने कुणि पपाः । कच्छय( च्य )ते कच्छः । आह च- तुणिस्तुन्नक आपीतस्तुणिकः कच्छकस्तथा । कुबेरकः कान्तलको नन्दिवृक्षोऽथ नन्दकः ॥ अश्वत्थाकारोऽयम् ॥ १२८ ॥ रक्ष्यतस्या राक्षसी । क्षियति वरुणसम नाथ क्षेमकः । दुष्पत्रचोरकत्वात् । गणं हासयति गणहासकः चोहनवत् । आह च- चोरकः शङ्कितश्चण्डा दुष्पुत्रः क्षेमकः रिपुः । गणहासः कोहनः कितवः फलको(चो)रकः ॥ गन्धद्रव्यं चैतत् । व्यालायुधं नखत्वात् । चक्रमलं धूपद्रव्यैः करोति चक्रकारकम् ॥ १२९ ॥ नखीयं, विद्रुमलताभा । कपोताङ्घ्रिर्नीलकाखवत् । नृत्यति वायुना नर्तयन्त्याम्री । धमनी शौषिर्यात् । अञ्जनाभकेशा ( अञ्जनकेशी ) । आह च- नलिका विद्रुमलता कपोतचरणा नली । शुषिरा धमनी शून्या निर्मध्या नर्तकी नटी ॥ हन्ति हनुस्तीक्ष्णप्रभावान् । हट्टे विलसति हट्टविलासिनी वल्वव वा ॥ १३० ॥ शुक्त्याकृति । अत एव शङ्ख । खुरति विलिखति खुरः, प्राणिशफत्वाद्वा । कालदलं बदरपत्रस्येयेन्दुनोपम् । न खनति नखम् । आह च- नखं करहं पिलीं करजोऽथ खुरः शफः । शुक्तिः शङ्खः ख( च )लः कोशी( ली ) हनु-

शुक्तिः शंखः खुरः कोलदलं नखमथाढकी ।
काक्षी मृत्स्ना तुवरिका मृतालकसुराष्ट्रजे ॥ १३१ ॥
कुटन्नटं दाशपुरं वानेयं परिपेलवम् ।
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ॥ १३२ ॥
ग्रन्थिपर्णं शुकबर्हं पुष्पं स्थौणेयकुक्कुरे ।
मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ॥ १३३ ॥
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ।
तपस्विनी जटा मांसी जटिला लोमशामिषी ॥ १३४ ॥
त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ।
कर्चूरको द्राविडकः काल्य( ल्प )को वेधमुख्यकः ॥ १३५ ॥

---

नागहनुः सहः ॥ आढकीसदृशधान्यत्वा तुवरीत्वात्, तुवरो हि कषायो रसः । कषति काक्षी । प्रशस्ता मृत् मृत्स्ना, सस्नोप्रशंसायाम् ( सू० ) । त्रिरत्नेनेन हेम मृतालकम् । सुराष्ट्रदेशे जातम् । आह च- सौराष्ट्री च मृतालङ्गः काक्षी कामी सुराष्ट्रजा । आढकी तुवरी स्नुचा मृत्स्ना मृत्त्रा( त्ला ) मृतालकम् ॥ १३१ ॥ कुटन्ती नटति, कुटन्नटानि । दशपुरे भवं दाशपुरं, दाशान्निपर्तते वा, कैवर्तीमुस्तत्वात् । वने जातं वानेयं, नद्यादिभ्योढक् ( सू० ) । प्लवते लघुत्वात्प्लवः । गाः पिपर्ति गोपुरम् । अत एव गोनर्दम् । आह च- परिपेलवं प्लवं वन्यं गोपुरं स्यात्कुटन्नटम् । सितपुष्पं दाशपुरं गोनर्दं जीर्णबुध्नकम् ॥ १३२ ॥ ग्रन्थिप्रधानानि पर्णान्यस्य ग्रन्थिपर्णं, ग्रन्थीन्वा पिपर्ति ग्रन्थिमत्त्वात् । शुकस्येव बर्हाणि पर्णान्यस्य शुकबर्हं, शुक बर्हमिति पदैकदेशत्वाद्वा द्वे संज्ञे । पुष्प्यति पुष्पं विकचात्मकम् । स्थूणया इव स्तम्बेन स्थौणेयम् । कुकुर भाषते । आह च- स्थौणेयकं बर्हिचूडं शुकपुच्छं शुकच्छदम् । विकच शुकबर्हं च हरितं ग्रन्थिलोमकम् ॥ मरुन्माले मारुतगन्ध्ये द्वे संज्ञे एते, अयं तु तुरुष्कादेका मन्यते, मरुत्स्विता माला वा । पिशुना गन्धसूचकत्वात् । स्पृशति गन्धैः स्पृक्का । देवी देवपुत्रीत्वात् ॥ १३३ ॥ वधूरात्मवधुत्वात् । कोटिभिर्वर्षति मधु कोटिवर्षा । लङ्कायामुत्पन्ने लङ्कोपी, समुद्रान्तत्वात् । इन्द्रादयः- स्पृक्का माला पङ्क्तिरुर्निला देवी लताप्रियः । देवपुत्री च लङ्कोपी शीता पङ्कजमुद्रिका ॥ समाहृता कोटिवर्षा निर्माल्याभावनुः स्मृता । धन्वन्तरिश्च- स्पृक्का समन्तानी देवी लता लङ्कोपिकेत्यपि । पङ्कमुद्रिर्देवपुत्री निर्माल्या पिशुना वधूः । स्वर्णे समुद्रान्ता कर्पासी यदाहुः- स्पृक्का च । जटाः सन्त्यस्या जटा । अत एव तपस्विनी । सजातमांसमांसी । अत एवामिषी । गन्धमांसी चेयम्, यदाह- मांसी कृष्णजटा हिता नल्दा जटिलामिषी । जटा च पिशिता मेषी क्रव्यादा च तपस्विनी ॥ द्वितीया गन्धमास्यन्या भूतकेशी जया स्मृता । पिशाची पूतना केशी भूतकेशी च लोमशा ॥ १३४ ॥ त्वग्रूपत्रकत्वात् । पत्नाति पत्रम् । उत्कटं गन्धकार्यात् । भृङ्गं कार्ष्ण्यैर्भ्रमणात् । चोचमभिचोदकम् । वरमङ्गमस्य वराङ्गकम् । आह च- त्वचं वराङ्गं भृङ्गं स्याच्चोचं शकलमुत्कटम् । कृन्तति त्वग्दोषं कर्चूरः, हरिद्राभः । द्रावयति द्राविडः । कल्यकारी काल्यः । आह च- कर्चूरको गन्धमूलो द्राविडः काल्य एव च । वेधमुख्यो दुर्लभश्च कस्य निस्वमता गती ॥ १३५ ॥ ओषं फलपाकान्ता जातिः । सैवौषध लोमहत् । सर्वमिति से दृष्टवैकात्मप्यौषध, ओषधेर्जातौ ( सू० ) इत्यण् । तद्विशेषाच्छकादीनाह । शक्यतेऽनेन भोक्तुं स्वति देहं वा शाकम् । पत्त्र निम्बादेः, पुष्पं कोविदारादेः । आदिफलदाडिमप्ल वार्ताकादेः, मूलं मूलकविशादेः, स्कन्दः सूरणादेः, अङ्कुरो वंशादेः । आह च- मूलपत्रकरीरप्रकन्दाग्निस्कन्धकाः । त्वक्पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥ तिलकं तापस्त्रिमत्वेन गलितः, वश तु श्लेष्म( म )- तस्य कण्मूलादेः सेव्यत्वे द्विभलङ्गवर्मिस्तान्मन्यामहे । कलकं छत्रिका । शाकविशेषानाह । तालयति

ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ।
शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः ॥ १३६ ॥

विशल्याग्निशिखानन्ता फलिनी शक्रपुष्प्यपि ।
स्यादृक्षगन्धा छगलाण्ड्या( न्त्या )वेगी वृद्धदारकः ॥ १३७ ॥

जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ।
पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ॥ १३८ ॥

हयपुच्छी तु काम्बोजी माषपर्णी महासहा ।
तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ॥ १३९ ॥

वर्वरा कवरी तुङ्गी खरपुष्पाजगन्धिका ।
एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ॥ १४० ॥

चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ।
सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ॥ १४१ ॥

---

दो गास्तण्डुलायक, लघुतण्डुलाभवीजो वा । अल्प मृप( ष्र )ःयल्पमारिषः । आह च– तण्डुलीयक उद्दिष्ट ख[ च ]गला (?) तण्डुलेरक । भण्डीरस्तण्डुलीवाजो मेघनादो घनस्वन ॥१३६॥ लाङ्गलिकीयं पूर्वोक्तापि शाकत्वादिहोपात्ता । ऋक्षवद्गन्धयति ऋक्षगन्धा, ऋष्यगन्धा वृक्षगन्धेति च पाठभेद । छगलरेवाण्डान्यस्थीन्यस्याश्छगलाण्डी । आवेगी वृक्षवात्, उद्वेजको वा । वृद्ध वृद्धत्व दारय ति वृद्धदारक, वृद्धं दारकीकुरुते वा । जुङ्गति वृद्धे दोषान्जुङ्ग, जुगि वर्जने । आह च– वृद्धदारक आवेगी जुङ्गको जीर्णवालक । अन्न कोष्क(?)पुष्पा स्यादजान्त्री छगलाण्ड्यपि ॥ द्वयर्थे वृक्षगन्धा वृद्धदारक पिण्डालुक विदारी च ॥ १३७ ॥ ब्राह्मी पावनीत्वात् । मत्स्याक्षी मत्स्यपुष्पा । वयस्था वयस स्थैर्यकृत् । द्वयर्थे सोमवल्ली वाकुची गुडूची ब्राह्मी च । हिमावता हिमजातत्वात् । आह च– क्षीरिणी काञ्चनक्षीरी पटुपर्णी च कर्णिनी । तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती ॥ स्वर्णक्षीरी स्वर्णवती सुवर्णक्षीरिकापि च । द्वयर्थे हैमवती हिमावती हरीतकी श्वेतवचा च ॥ १३८ ॥ हयपुच्छाकृति । कम्बोजदेशे भवा काम्बोजी । महासहेति मुद्गपर्ण्या सहाया भिन्नेयम् । आह च– माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा । आर्द्रमाषा सिंहवृन्ता माष[ मास ]न सा श्वपुच्छिका ॥ तुण्डिकेरी– ओष्ठोपमफलत्वात् । बिम्बमिव बिम्बिका । आह च– बिम्बी रक्तफला तुण्डी तुण्डिकेरफला च सा । ओष्ठोपमफला गोह्वा (?) पीलुपर्णी च तुण्डिका ॥ द्वयर्थे तुण्डिकेरी बिम्बी कर्पासी च ॥ १३९ ॥ शाकोऽयम्, वर्वरा कुञ्चितस्त्रकेशाभा, अत एव कबरी । आह च– अजगन्धा खरपुष्पा वस्त्रगन्धाप्यगन्धिका । कवरी वर्दरागन्धा तुङ्गी पीतमयूरक ॥ रस्यते रास्ना । आह च– रास्ना युक्तरसा रस्या श्रेयसी रसनी रसा । सुगन्धमूला सिरसा सैव युक्ताफला मता ॥ द्वयर्थे सुवहा रास्ना शेफालिका नकुली च ॥ १४० ॥ चाङ्गं दन्तपटुत्वमीरयति चाङ्गेरी । चुक्यते व्यथनेऽस्याश्चुक्रिका । अम्बे तिष्ठत्यम्बष्ठा । अम्लेन लुनात्यम्ललोणिका, अथवाष्टोयम् । आह च– क्षुद्राम्लीका तु चाङ्गेरी लोणिका चाम्ललोणिका । द्वयर्थे– अम्बष्ठा पाठा मोचिका चाङ्गेरी च, तथा चुक्रिकाम्लिका चाङ्गेरी भण्डारी च । आह च– अम्लकोऽम्लवेतसो मोगो रसाम्लोऽम्लितवेतस । रक्तसवो वेतसाम्ल शतवेधी च वेधक ॥ द्वयर्थे चुक्रो वृक्षाम्लोऽम्लवेतसश्चक्रश्च, तथा सहस्रवेधी– अम्लवेतसो हिङ्गुलता कस्तूरी च ॥ १४१ ॥ नमस्कारी अञ्जलिकापत्रत्वात् । गण्डेषु ग्रन्थिषु कृष्णा गण्डकाली । समान-ङ्गान्यस्या समाङ्गा । खदिरा कृष्णसूक्ष्मपत्रत्वात् । आह च– रक्तपादी शमीपत्रा समङ्गा खादिरिका । नमस्कारी गण्डकाली रास्ना खादिरकेत्यपि ॥ जीवत्यनया जीवनी ।

नमस्कारी गण्डकाली समा( म )ङ्गा खदिरेत्यपि ।
जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥ १४२ ॥
कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ।
किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला ॥ १४३ ॥
विमला शा[ सा ]तला भूरिफेना चर्मकसेत्यपि ।
वायसोली स्वादुरसा का( व )यस्थाथ मकूलकः ॥ १४४ ॥
निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ।
अजमोदा तूग्रगन्धा ब्रह्मदर्भा यमा[वा]निका ॥ १४५ ॥
मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ।
अव्यथातिचरा पद्मा चारटी पद्मचारिणी ॥ १४६ ॥
काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ।
प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥ १४७ ॥

---

आह च— जीवन्ती जीवनीया च जीवा जीवनवर्धनी । मङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी ॥१४२॥ कूर्चः शीर्षेऽस्य कूर्चशीर्षः । शृङ्गः शृङ्गाभः । जीवयति जीवकः, जीवतीति वा दीर्घायुष्ट्वात् । आह च— जीवकः शृङ्गकः सर्जो दीर्घायुः कूर्चशीर्षकः । ह्रस्वाङ्गो मधुरः स्वादुः प्राणदश्चिरजीव्यपि ॥ किरातदेशे भवस्तिक्तः किराततिक्तः । अनार्यः किरातः । आह च— किराततिक्तको हैमकाण्डतिक्तः किराततिक्तः । भूनिम्बोऽनार्यतिक्तश्च कैरातो रामसेनकः ॥ १४३ ॥ सपति समवैति सप्तला । शा[ सा ]तं सुखं लाति शा[ सा ]तला । भूयः फेनाभा बिन्दवोऽस्या भूरिफेना । चर्मे कसति वर्धते चर्मकसा, चर्मकषेत्येके । आह च— शातला सप्तला सारा विन्दुला विमलामला । बहुफेना चर्मकसा फेना दीप्ता सगालिका ॥ वायसवद्वलीयते वायसोली काकोल्याख्या । काये तिष्ठति कायस्था, कि ज्ञाने । आह च— काकोली मधुरा शुक्ला क्षीरा(री) ध्वाङ्क्षोलि( लि )का मता । कायस्था स्वादुमांसी च वायसोली च कारि(लि)का॥ ऽपर्थे स्वादुरसा पृथ्वीका शतावरी काकोली( ली ) च ॥ १४४ ॥ मकते चिरन्वान्मकूलकः । नियतः कुम्भो निकुम्भः । दन्ताभा दाम्यन्त्यनया दोषा वा दन्ती । आह च— दन्ती शीघ्रा निकुम्भा स्यादुपचित्रा मकूलकः । तथोदुम्बरपर्णी च विशल्या च घुणप्रिया ॥ द्रवर्थे प्रत्यक्श्रेणी द्रवन्ती दन्ती च । अजवन्मोदो गन्धोऽस्या अजमोदा । ब्रह्मदर्भाभा । यच्छत्यामिमान्द्यं यमानी, पूर्वोक्तापोह शास्त्रात् पुनरुक्ता, यवानी मन्दा वा मन्यकृद् भ्रान्तः । आह च— यवानी दीप्यको दीप्यो यवसाह्वयनामकः । यमानिकोग्रगन्धा च दीपनीया च दीपना ॥ पूर्वोक्ता हि खराश्वेवाजमोदा मधुकुशा च । तथा चेन्द्रायाः— अजमोदा मधुकुशा खराश्वा लोचमर्कटः । वल्लीमोदा वस्तमोदा सैव हस्तिमयूरकः ॥ १४५ ॥ पुष्करमूले त्रीणि नामानि । पद्मपत्रमिति ग्रन्थकृद् भ्रान्तः, पद्मवर्णेति लिपिभ्रान्त्या पद्मपर्णमिति बुद्धवान्, यदाह— मूलं पुष्करमूलं च पौष्करं पुष्कराह्वयम् । काश्मीरं पुष्करजटा धीरं तत्पद्मवर्णकम् ॥ अव्यथं चरति— अतिचरा । पद्माभा । चरति चारटी । आह च— पद्मचारिण्यतिचरा पद्मा पद्मावतीति च । चारटी गन्धमूला च लक्ष्मीः श्रेष्ठा सुपुष्पका ॥ ऽपर्थे— अव्यथा हरीतकी महाश्रमणी पद्मचारिणी च ॥ १४६ ॥ कम्पिलदेशे भवः काम्पिल्यः । चन्द्रोऽह्लादनात्सौम्याद्वा । ( रोचनी ) रेचनीति सम्यक् पाठः, यदाह— काम्पिल्यकोऽथ रक्ताङ्गो रेचनो रेचकस्तथा । रञ्जनो लोहिताङ्गश्च कर्कशो रक्तचूर्णकः ॥ आहेन्दुः— कर्कशस्तु करंजः[ भः ] स्वरस काम्पिल्यः पटोलकः । प्रपुनाति प्रपुनति वा प्रपुन्नाडः । एडवन्मेषवद् गन्धोऽस्यैव एडगजः ॥ चक्राणि दद्रुमण्डलानि मृद्नाति चक्रमर्दकः ॥ १४७ ॥ पद्मवद्दर्ति पद्माटः । उरणक-

पश्चाट उरणाक्षश्च पलाण्डुस्तु सुकन्दकः ।
लतार्कदुर्द्रुमौ तत्र हरितेथ महौषधम् ॥ १४८ ॥
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ।
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ॥ १४९ ॥
स्याद्वातकः शीतलोपराजिता शणपर्ण्यपि ।
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ॥ १५० ॥
वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ।
विष्वक्सेनप्रिया घृ(गृ)ष्टिर्वाराही बदरेत्यपि ॥ १५१ ॥
मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी ।
शतपुष्पा सितच्छत्त्रातिच्छत्त्रा मधुरा मिसिः ॥ १५२ ॥

---

न्मेषवदक्षिण्यस्योरणाक्षः । इन्द्रायाः– चक्रमर्दः स्मृतश्चक्री प्रपुन्नाडश्च नामतः । एकरेतो दद्रुहरो मेषाक्षे-डगजश्च सः ॥ पिबति धातून्पलाण्डुः । तत्र हरिते तत्र नीले पलाण्डौ लतार्को लतर्कादयः । दुष्टो द्रुमो-पवित्रत्वात् । धन्वन्तरिस्त्वभेदेनाह– पलाण्डुर्भे(र्य)वनेष्टश्च मुकुन्दो मुखदूषकः । हरितोऽन्यः पलाण्डुस्तु लतार्को दुर्द्रुमश्च सः ॥ १४८ ॥ सुश्रुतस्त्वाह– लशुनो दीर्घपत्त्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लवणकोऽपराजित ॥ गृञ्जन यवनेष्टश्च पलाण्डोर्देश जातयः । महौषधं सर्वरोगजित्त्वात् । लशति छिनत्ति रोगान्– लशुनम् । गृञ्जति कुत्सितं शब्द्यते गृञ्जनः । न रिष्यत्यरिष्टः । रसोनः पञ्चरस-त्वात् । आह च– रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् । महाकन्दो रसाह्वयोऽन्यो गृञ्जनो दीर्घ-पत्त्रकः । महौषधगृञ्जनादीनामाकृतिभेदेऽपि प्रायैक्यादभेदं मन्यते । पुनर्नवेव ( छिन्नापि ) विशाख-त्वात् । आह च– पुनर्नवो विशाखश्च कठिल्लः स शिलाटकः । वृश्चीवः क्षुद्रवर्षाभूर्दीर्घपत्त्रः कठिल्लकः ॥ वितुद्यते वितुन्नकं नाम शाकम् । सुष्ठु निषीदन्त्यस्मिन्गुणा सुनिषण्णकम् । आह च– शितिवा[ सा ]-रः गुलतुरस्तुल्या(?) च सुनिषण्णकः। शाकभेदोऽयम्, यदाह– पाठा शठी दाडी शाकं वास्तुकं सुनिषण्णकम् । विबन्धघ्नमवसंसि वर्चोभिदि तु वास्तुकम् ॥ १४९ ॥ शीतलवातक इत्येका संज्ञा, यन्धन्वन्तरिः शणपर्णी शीतलवातक इत्याह । द्वयर्थेऽपराजिता शीतलवातको गिरिकर्णिका च । कटत्यावृणोति कटभी । पण्या स्तुत्या । ज्योतिष्मती– अग्न्याभत्वात् । लता दूरप्रसरात् । आह च– ज्योतिष्मती तु कटभी स्या-त्सुवर्णलतेति च । ज्योतिष्का वह्निभासा च लवणोत्का च दुर्दना ॥ द्वयर्थे लता प्रियङ्गुज्योतिष्मती सारिवा च । द्वयर्थे पारावतपदी काकजङ्घा ज्योतिष्मती च ॥ १५० ॥ वर्षासु भवं वार्षिकम् । आह च– त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका । बलभद्रा बलदेवा वार्षिकं गिरिसानुजम् ॥ वाराही वराहकान्ता, ( अत एव विष्णुवल्लभा ) । अत एव घृ[ गृ ]ष्टिर्घ[ र्ष ]र्षणात् । द्वयर्थे बदरा सुवर्चला अश्वगन्धा वाराही च ॥ १५१ ॥ मर्वति संपृच्यते मार्कवः । भृङ्गवद्राजते रञ्जयति कृष्णी-करोति च भृङ्गराजः, भृङ्गरजोऽपि । आह च– भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । अङ्गारकः केशरजो भृङ्गारः केशरञ्जनः ॥ काकान्मचति( ते ) वर्णेन संपृच्यते काकमाची । अत एव वायसी, काचमाच्यपि । आह च– काकमाची ध्वाङ्क्षमाची काकाह्वा च वायसी । शतपुष्पा बहु-पुष्पा । सितच्छत्त्राभा ॥ १५२ ॥ अत्राऽऽद्यर्धं पुमानि पुष्पाण्यस्या अवाक्पुष्पी ॥ कारोरिव कारवी

अजास्पुष्पी कारवी च सरणा तु प्रसारिणी ।
तस्यां कटंभरा राजवला भद्रवलेति च ॥ १५३ ॥

जनी जतूका जन(रज)नी जतुकृच्चक्रवर्तिनी ।
संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ॥ १५४ ॥

कर्चूरोपि पलाशोथ कारवेल्लः कटिल्लकः ।
सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः ॥ १५५ ॥

कूष्मांडकस्तु कर्कारुर्(रू)र्वारुः कर्कटी स्त्रियौ ।
इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे ॥ १५६ ॥

चित्रा गवाक्षी गोतुम्बा विशाला त्विन्द्रवारुणी ।
अर्शोघ्नः सू(शू)रणः कन्दो गण्डीरस्तु समष्ठिला ॥ १५७ ॥

---

कर्मगन्धा । आह च– शतपुष्पा मिसिर्घोषापाचका मासवी शता । अतिच्छत्रा त्ववाक्पुष्पा शताह्वा कारवी स्मृता ॥ सरति वातस्रकाधानिवर्ततेऽङ्गमनया सरणा, सरणा तु युक्त पाठ । कटं बिभर्ति कटंभरा। राजते सुष्ठा बला बलदत्त्वात् । आह च– प्रसारणी तु प्रसरा सरणा सारणा च सा । चारुपर्णी राजबला भद्रपर्णी प्रसारिका ॥ १५३ ॥ जायतेऽस्या जन्तुर्जनी । जतु करोति जतूका । सा तु मर्गोस्या संस्पर्शा । आह च– जतुकरा तु जतुकृज्जतुकारी जनी स्मृता । जनना चैव मक्ष्णा जतूका चक्रवर्तिना ॥ शटति शटी, षड्ग्रन्थ्यैकैकदेश पर्वाणि मूलान्यस्याः ॥ १५४ ॥ पलाशः सन्दरा पलाश । आह च– शटी पलाशः पत्राढ्या शिखा पृथुपलाशिका । सुगन्धमूला गन्धाली षड्ग्रन्था सुरमा वधूः ॥ कम्र चित्तसमा। पत्राणि कर्चूरस्य पत्राणि पथ्या कर्चूरवन्नेतीदं कर्चूरोपाख्यानम् ॥ द्रूपर्णे चाह पर्णी गन्धपलाश कर्चूर-र्थानि । कारेण वेल्लति कारवेल्लः । कटि लाति कटिल्लः, कल्लावृणोति वा । सुष सूयते सुषवी । कोलति सम्लायते कुलक, कुत्सितं लवनं आस्वादनं वा । पटति सरलत्वादगेल । तिक्तः रसेन । पटुदेहपटुत्व-करः, स्वाद्वनुसार इत्येके । आह च– पटोल कुलकस्तिक्त पटुकः कर्कशच्छदः । राजफल पाण्डुफलो राजीमलमताक्षणः ॥ १५५ ॥ कोष्ण्यमासातीति, कुत्सितोष्माण्डेषु बीजान्यस्य वा त्रिसकारिकात्कूष्माण्ड, कुम्भने कशति कृषि वा । कर्कशामारिपर्णि– अरुणैरिवाप्यत्र अरणवाककर्कोंद । आ– ईर्षेन– एर्वारु कटुरिंगी, उर्वारुकमिव वचनादिति श्रुते –उर्वारुक स्वादुर्विस्तिमत्तु । हन कर्के कर्करा, प्रातस्त्य ईं किवष्टप्रत्यय । इष्यत इक्ष्वाकु, क्षतिमथनमाद्वा । कटुका तुम्बी, तुबि अर्दने । आह च–कटुकालाबुनी तुम्बी ल(तु)म्बी पिण्डफला तथा । इक्ष्वाकु क्षत्रियश्चनस्तिक्तबीजो महाफल ॥ नलम्बनेलाबू, ऊकता लम्बत्, न लाति वन्स्तजलम् । समे इति सा त्रेनापि । अमरेन्द्रया –अलाबूस्तुम्बक प्रोक्ता नलात्वलाबूस्तुम्बुनी । सस्वाम्बुमहातुम्बीति– ॥१५६॥ गोतुम्बा, अक्षयोग्य गवाक्षीत्वात् । आह च– ऐन्द्री चित्रा गवाक्षी इन्द्रवारुणी । गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि ॥ द्रूपर्थे चित्रा विशाला इत्यन्ये । चैति विशालायाधिका- लिङ्ग भ्रान्तो मन्यन्ते । गवाक्षी विशेषो वा विशालेति न दोष । विशाला महाफलत्वात् । इन्द्रवरो व्रजा- र्ता इन्द्रवारुणी । आह च– इन्द्रवारुणी प्रोक्ता विशाला तु महाफला । आम्रमणा चित्रफला तुरवी मधुपी च सा ॥ सूयते प्रेरेते सूरणः । कन्दनेतिस्थाने कन्दो मूलविशेष । गण्डते गन्धीरमिति गण्डीर, पुंसि । उन्मग्ना गम्भीनेतेति समष्ठिला सम्प्रत्वात्, समष्ठिला नाम शाक, वनमाला–गण्डीरो ना समष्ठिला ॥१५७॥ कल्कमनमा कटम्बी । अर्शसोऽर्शो जगद्नुहाद्, अर्शोदमन्दकर त्रि धन्वन्तरि. ।

पद्मात् उरणाक्षश्च पलाण्डुस्तु सुकन्दकः ।
लतार्कदुर्द्रुमौ तत्र हरितेथ महौषधम् ॥ १४८ ॥
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ।
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ॥ १४९ ॥
स्याद्वातकः शीतलोपराजिता शणपर्ण्यपि ।
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ॥ १५० ॥
वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ।
विष्वक्सेनप्रिया घृ(गृ)ष्टिर्वाराही बदरेत्यपि ॥ १५१ ॥
मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी ।
शतपुष्पा सितच्छत्त्रातिच्छत्त्रा मधुरा मिसिः ॥ १५२ ॥

---

न्मेषवदक्षिण्यस्योरणाक्ष । इन्द्रायाः – चक्रमर्दः स्मृतश्चक्री प्रपुन्नाडश्च नामतः । एकरेतो दद्रुहरो मेषाक्षि-कुसुमश्च सः ॥ पिपर्ति धातून् पलण्डुः । तत्र हरिते तत्र नीले पलाण्डौ लतार्को लतर्काख्यः । दुष्टो द्रुमो-पवित्रत्वात् । धन्वन्तरिस्त्वभेदेनाह– पलाण्डुर्म(र्य)वनेष्टश्च मुकुन्दो मुखदूषकः । हरितोऽन्यः पलाण्डुस्तु लतार्को दुद्रुमश्च सः ॥ १४८ ॥ सुश्रुतस्त्वाह– लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च स्तवकोऽपराजितः ॥ गृञ्जनो यवनेष्टश्च पलाण्ड्वादेश जातयः । महौषधं सर्वरोगजित्त्वात् । लशति छिनत्ति रोगान्– लशुनम् । गृञ्जति कुत्सितं शब्द्यते गृञ्जनं । न रिष्यत्यरिष्टं । रसोनः पञ्चरस-त्वात् । आह च– रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् । महाकन्दो रसोनश्चोऽन्यो गृञ्जनो दीर्घ-पत्रकः । महौषधगृञ्जनादीनामाकृतिभेदेऽपि रसाद्यैक्यादभेदो मन्यते । पुनर्नवेव ( छिन्नापि ) विशाख-त्वात् । आह च– पुनर्नवो विशाखश्च कठिल्लः शिलाटकः । वृश्चीवः क्षुद्रवर्षाभूर्दीर्घपत्रः कठिल्लकः ॥ वितुद्यते वितुन्नकं नाम शाकम् । सुष्ठु निषीदन्त्यस्मिन् गुणाः सुनिषण्णकम् । आह च– शितिवा[ सा ]-रः सूतपुत्रस्तुल्या(?) च सुनिषण्णकः । शाकभेदोऽयम्, यदाह– पाठा शुण्ठी शटी शाकं वास्तुकं सुनिषण्णकम् । विद्धि पथ्यमवस्त्रे सि वर्चोभिदि तु वास्तुकम् ॥ १४९ ॥ शीतलवातकः इत्येका सज्ञा, यद्धन्वन्तरिः शणपर्णी शीतलवातकः इत्याह । द्वयमेकेऽपराजिता शीतलवातको गिरिकर्णिका च । कटत्यावृणोति कटभी । पण्या स्तुत्या । ज्योतिष्मती– अग्न्याभत्वात् । लता दूरप्रसरात् । आह च– ज्योतिष्मती तु कटभी स्यात्सुवर्णलतेति च । ज्योतिष्का च शिभासा च लवणोत्का च दुर्दना ॥ द्व्यर्थे लता प्रियङ्गुर्ज्योतिष्मती सरिवा च । द्व्यर्थे पारावतपदी काकजङ्घा ज्योतिष्मती च ॥ १५० ॥ वर्षासु भवं वार्षिकम् । आह च– त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका । बलभद्रा बलद्रा वार्षिकं गिरिसानुजम् ॥ वाराही वराहकान्ता, ( अत एव विष्णुवल्लभा ) । अत एव घृ[ गृ ]ष्टिः [ वं ]पणात् । द्व्यर्थे बदरा सुवर्चला अश्वगन्धा वाराही च ॥ १५१ ॥ मवति सपृच्यते मार्कवः । भृङ्गवद्राजते रञ्जयति कृष्णी-करोति च भृङ्गराजः, भृङ्गरजोऽपि । आह च– भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । अङ्गारकस्त्वेकरजो भृङ्गारः केशरञ्जनः ॥ काकवन्मचति( ते ) वर्णेन सपृच्यते काकमाची । अत एव वायसी, काचमाच्यपि । आह च– काचमाची ध्वाङ्क्षमाची काकसाह्वा च वायसी । शतपुष्पा बहु-पुष्पा । सितच्छत्त्राभा ॥ १५२ ॥ अग्राच्च्यवमुखानि पुष्पाण्यस्या अवाक्पुष्पी ॥ कारोरिव कारवी

अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ।
तस्यां कटम्भरा राजबला भद्रबलेति च ॥ १५३ ॥

जनी जतूका जन(रज)नी जतुकृच्चक्रवर्तिनी ।
संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ॥ १५४ ॥

कर्चूरोऽपि पलाशोऽथ कारवेल्लः कटिल्लकः ।
सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः ॥ १५५ ॥

कूष्माण्डकस्तु कर्कारुर्(रि)र्वारु कर्कटी स्त्रियौ ।
इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे ॥ १५६ ॥

चित्रा गवाक्षी गोतुम्बा विशाला त्विन्द्रवारुणी ।
अर्शोघ्नः सू(शू)रणः कन्दो गण्डीरस्तु समष्ठिला ॥ १५७ ॥

---

कर्मण्या । आह च– शतपुष्पा मिसिर्घोषा माधवी शफा । अतिच्छत्रा त्ववाक्पुष्पी शताह्वा कारवी स्मृता ॥ सरति प्रतानैर्विस्तीर्यते सरणा, सरणा तु युक्तः पाठः । कटं बिभर्ति कटम्भरा । राजसु मुख्या बला राजबला । आह च– प्रसारणी तु प्रसरा सरणा सारणा च सा । चाम्पेया राजबला भद्रपर्णी प्रतानिका ॥ १५३ ॥ जायतेऽस्या जन्तुर्जनी । जतु करोति जतूका । समन्तात् स्पर्शोऽस्याः संस्पर्शा । आह च– जतुकारी तु जतुकृज्जतुकारी जनी स्मृता । जननी चैव संस्पर्शा जतूका चक्रवर्तिनी ॥ शटति शटी, षड्ग्रन्थिकैकदेशे षट्ग्रन्थीति मूर्धन्यादिमिदम् ॥ १५४ ॥ पलं शाकं तद्वत् पलाशः । आह च– शटी पटी पलाशश्च तथा पृथक्पलाशिका । सुगन्धमूला गन्धाली षड्ग्रन्था सुव्रता वधूः ॥ कर्चूरं विलसमना । पलाशानि कर्चूरस्य पर्यायाः पत्त्राणि कर्चूरवत्त्वेतानि कर्चूरोपादानम् ॥ द्व्यर्थे चाह शटी गन्धपलाशं कर्चूरमिति । कारेण वेल्लति कारवेल्लः । कटि लाति कटिल्लः, कटिल्लवृक्ष इति वा । सुष्ठु सूयते सुषवी । कोरति सङ्घीयते कुलकं, कुत्सितं लवणं आस्वाद्यते वा । पटति सरलत्वात् पटोलः । तिक्तरसेन । पटुर्देहपटुत्वकृत्, लवणानुसार इत्येके । आह च– पटोलः कुलकस्तिक्तः पटुकः कर्कशच्छदः । राजीफलः पाण्डुफलो राजिमानमृताफलः ॥ १५५ ॥ कोष्मा ऊष्माणिति, कुत्सिता ऊष्माण्डेषु बीजेष्वस्य वा पित्तकारित्वात्कूष्माण्ड, कुष्यते कणति तृप्तिं वा । कर्कोऽश्वस्तस्य इयर्ति– अश्वाकारस्य धावनं सरणं वा कर्कारुः । आह– ईर्वेण– एर्वारु पटुः स्त्रियां, उर्वारुकमिव बन्धनादिति श्रुतेः –उर्वारुकं स्यात् त्रिधागमत्वात् । हलं कर्कं कर्कटा, प्रानव्यव च किञ्च्यात्ययः । इष्यते इक्ष्वाकु, क्षारद्यवनवाद्वा । कटुका तुम्बी, तुबि अर्दने । आह च– कटुकालाबुनी तुम्बी स(तु)म्बा पिण्डफला तथा । इक्ष्वाकुः क्षत्रियवरस्तिक्तबीजो महाफलः ॥ न लम्बते लम्बूः, काकतान्, न लाति वान्तत्वम् । समे इति स्त्रीत्वेनापि । अत्रेन्द्रायां –अलाबूस्तुम्बकः प्रोक्ता जलाम्बूरलाम्बुनी । महालाम्बुमहातुम्बीति– ॥१५६॥ गोतुम्बा, अतथ्योय गवाक्षित्वात् । आह च– ऐन्द्री त्विन्द्रवारुणी द्राक्षा इन्द्रैर्वास्युपाद्नी । गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि ॥ द्व्यर्थे चित्रा विशाला दवन्ती चेति विशालाचित्रात्वात् भ्रान्तो ग्रन्थकृत् । गवाक्षी विशेषो वा विशालेति न दोषः । विशाला महाफलत्वात् । इन्द्रवदर्शनाद्वारुणीन्द्रवारुणी । आह च– अत्रैन्द्रवारुणी प्रोक्ता विशाला तु महाफला । आनरक्षा चित्रफला तुवसी त्रपुषी च सा ॥ सूयते प्रेर्यते सूरणः । कन्दते निर्गच्छते कन्दो मूलं तेऽपि । गण्डीन् ग्रन्थीनीरयति गण्डीरः, पुंसि । समन्ततो मृत्स्ना समष्ठिला सान्द्रत्वात्, समष्ठिला नाम शाकं, रत्नमाला–गण्डीरा ना समष्ठिला ॥१५७॥ कदम्बम्भसा कलम्बी । अगनोदका जगत्प्रत्यात्, अपोदकमस्त्रकमिति धन्वन्तरिः ।

कलम्ब्यपोदकाख्री तु मूलकं हिलमोचिका।
वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ॥ १५८ ॥

सहस्रवीर्याभार्गव्यौ रुहानन्ताथ सा सिता।
गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः ॥ १५९ ॥

कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्।
स्याद् भद्रमुस्तको गुन्द्रा चूडाला चक्रलोचटा ॥ १६० ॥

वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः।
शतपर्वा यवफलो वेणुमस्करतेजनाः ॥ १६१ ॥

वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः।
ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः ॥ १६२ ॥

नडस्तु धमनः पोटगलोथो काशमस्त्रियाम्।
इक्षुगन्धा पोदगलः पुंभूमनि तु वल्वजाः ॥ १६३ ॥

---

संज्ञित मूल मूलक ,अवदशतेऽप्यस्य शाकत्वं, यो ह्युभयोर्भवति लभते सोन्यतरतो व्यपदेशमिति। हिला-द्वीर्यान्मोचयति हिलमोचिका। वसन्त्यस्मिन्गुणा वास्तुकं क्षारपत्राख्यम्। कलम्ब्याद्याः पञ्चैते शाकप्रकाराः, शाकाख्यं पुष्पमूला( पत्रपुष्पा )दीस्वन आरभ्य वा(पृ० ७८) यन्माला-मण्डूकपर्णी पालङ्क्या चिञ्चिका चाप्यपोदका। चाङ्गेरी हिलमोचा च कलम्बी शाकजातय.॥ दूरं वाति दूर्व्यते वा पशुभिर्दूर्वा ॥१५८॥ भृगोरिय भार्गवी। सहस्रवीर्या बहुपर्वा महाप्रभावा वा। रोहति मूले रुहा। अनन्ता दूरप्रसरणात्, नीलदूर्वेयं, यदाह-नीलदूर्वा स्मृता शष्पं शाद्वल हरिता तथा। शतपर्वा शतवीर्या शतवल्लयसिता लता॥ सहस्रवीर्यानन्ता च दुर्मरा भार्गवी रुहा। गोरिव लोमान्यस्या गोलोमी। आह च- गोलोमी श्वेतदूर्वा च श्वेतगर्भा सिता लता। नीलश्वेतयो पर्यायविपर्यासोन्वेष्य। श्वेतदूर्वाविशेषोयम्। गण्डैर्ग्रन्थिभिरल्यते गण्डाली। मत्स्याक्षितुल्यग्रन्थि (शकुलाक्षक.)। आह च- गण्डदूर्वा तु गण्डाली तीव्रा मत्स्याक्षिकापि च। वह्नि-नाडी कलापश्च वारणी शकुलाक्षक ॥ १५९ ॥ कुरुदेश विन्दति कुरुविन्दः। मेघपर्यायोम्बुधरत्वात्। मुस्यति खण्डयति रोगान् मुस्ता, लक्ष्ये त्रिलिङ्गा। गुन्द्रन्ति रोगा अस्या गुन्द्रा। धन्वन्तरिरभेदेनाह- मुस्तमम्बुधरो मेघो घनो राजकशेरुकः। भद्रमुस्तो वराहोब्दो गाङ्गेय कुरुविन्दकः॥ उच्चटत्युत्फलत्यु-च्चटा, चकाङ्कियम् ॥ १६० ॥ वन्यते वंशः। त्वचि सरति त्वक्सारः, सृस्थिरे (सू०) इति घञ्। (त्वचिसार) तत्पुरुषेकृतिबहुलम् (सू०) इति सप्तम्या अलुक्। कर्म इयर्ति कर्मार। तृणानां ध्वजो मुख्य। यवाभं फलमस्य यवफल। वेणन्ति व( वि )नन्ति वानेन वेणु। मा क्रियतेनेन मस्कर, मस्कर मस्करिणौवेणुपरिव्राजकयो (सू०)। तेजयति तेजन.। द्वयर्थे तेजन. शरो वेणुश्च ॥१६१॥ कीति चकति कीचक ,कीचेति कायति वा। ग्रन्थ्यते ग्रन्थि। पर्वेति पर्व। पिपर्ति परु.। गुन्द्रो दर्भविशेष रुड, यदाहु - दर्भाणा स्थाने शरै प्रस्तरितव्यम्। तेजयति निशिनोति तेजनक। शृणाति पारुष्याच्छर। काशस्त्विषीका न॥१६२॥ नडयत्यर्दयति नड, नल गन्धे। धमनोन्त सुषिरत्वात्, धमिः सौत्र, यथा धान्तो धान्त धावनस्येव राशि। पोटेन स्वच्छेदेन गलति पोटगल। आह च- नलो नटो नडश्चैव स च पोटगल स्मृत.। धमनोनन्तरश्चैव नडस्तु शर उच्यते॥ काशते काश। कोकिलक्षपर्याय इक्षुगन्धेत्येके। द्वयर्थे पोटगल. काशो नडश्च। वल्वन्ते बल्वजास्तृणविशेषा ॥ १६३ ॥ रस्यते रसाल.। इष्यत इक्षु।

रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ।
स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ॥ १६४ ॥
अभयं नलदं सेव्यमभृणालं जलाशयम् ।
लामज्जकं लघुलयमवदाहेष्टकापथे ॥ १६५ ॥
नलादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ।
अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ॥ १६६ ॥
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ।
छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणौ ॥ १६७ ॥
शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ।
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ॥ १६८ ॥

---

पुण्ड्रदेशजत्वात् ( पुण्ड्रः ), पौण्ड्रोऽपि । कान्तमुत्समियर्ति कान्तारः, कान्ता अरका भागा अस्य वा । आदिशब्दात्कोशकाराद्याः । आह च– इक्षुः कर्कटको वंशः कान्तारो वेणुनिः सृतः । इक्षुरन्यः पौण्ड्रकश्च रसालः सुकुमारकः ॥ अन्यः करङ्कशालिः स्यादिक्षुयोनीक्षुवालिका । समानः इक्षुगन्धा स्यादिक्षुलः कोकिलाक्षकः ॥ वीरयते वीरणं वीरतरं च तृणभेदः । अस्य वीरणस्य मूलं उश्यते काम्यत इत्युशीरम् ॥ १६४ ॥ अभयं रोगहरत्वात् । आह च– उशीरमभृणालं स्यादभयं समगन्धिकम् । रणप्रियं वीरतरं वीरं वीरणमूलिका ॥ नलं याति नलदं अपारूप्यात्, नलति वा । सेवत एतामृणालमर्हितम् । जल आशेते जलाशयं, शीतवीर्यत्वाद्वा । लाति दोषान्–ला, ला मज्जासारोऽस्य लामज्जकम् । लघुगुणेन लीयते लघुलयम् । अवल[ दी ]यते दाहोऽनेनावदाहम् । इष्टं कापथमस्यावीर्यत्वादिष्टकापथम् । आह च– लामज्जकं सुना[ शं ] स्यादमृणालं लयं लघु । इष्टकापथकं शीघ्रं दीर्घमूलं जलाशयम् ॥ द्वयर्थेऽमृणालं लामज्जकमुशीरं च, तथा सेव्यं लामज्जकमुशीरं चेति । अवदाहमप्यत्तमाहुस्तच्चोशीरं नलदं, यदिन्दु:– अवदत्तं रणप्रियम् । ग्रन्थकृत्तु सेव्यामृणालयोर्नलदोशीरैकार्थतयाह भ्रान्तः ॥ १६५ ॥ ( नलादयः ) तृणजातीया इत्यर्थः । तृण्यतेऽदनेऽपशुभिस्तृणम् । गर्मुच्छ्यामाकौ तृणधान्यविशेषौ । गीर्यते गर्मुत् । श्यामं वर्णमकति श्यामाकः । प्रमुखशब्दान्नीवाराद्याः । तृणगर्मुती एकार्थे इत्येके । कौ शेते कुशः । कु( को )थति कुथः । दृणाति पापध्वान्तं दर्भः, दृभ्यते वा । पूयतेऽनेन पवित्रं, पवित्रमपि तु पवित्रकमिति स्मृतिः । कुत्सितं तृणं कत्तृणं, तृणे च जाताविति ( सू० ) कोः कत् ॥ १६६ ॥ पुरे भवं पौरम् । सुगन्धप्रयोजनं सुरभि ( सौगन्धिकम् ) । ध्यायते पशुभिर्ध्यामं धूमवर्णं च । देवैर्जग्धमिव जग्धत्वात् । यत्र तत्र रोहति रौहिषं, रुहेर्वृद्धिश्च ( उ० ) इति टिषच् । आह च– कत्तृणं शकलिर्भूरिमूलकं रौहिषं ततम् । ध्यामकं भूमकं पौरं मुद्गलं देवजग्धकम् ॥ द्वयर्थे सौगन्धिकं नीलपद्मे कत्तृणे गन्धपाषाणे च । छत्राकारस्तृणविशेषश्छत्रा । अतिक्रान्तश्छत्रामतिच्छत्रः, छत्रातिच्छत्रमित्येके । पापध्वान्तं हन्ति पालघ्नः । मालावत्सन्ति तृणान्यस्य मालातृणकः । भुवस्तृणं भूस्तृणः, पारस्करादित्वात् ( सू० ) सुट्, भूस्तृण वा । आह च– भूस्तृणो रौहिणो भूतिर्भूमिरोहश्च कुटुम्बकः । मालातृणश्च पालघ्नश्छत्रातिच्छत्रकस्तथा ॥ १६७ ॥ शस्यते शष्पं, शसु हिंसायाम् । बालं नवं तृणम् । घस्यतेऽद्यते घासः । यूयते यवसं तृणजातिः । अर्ज्यतेऽर्जुनं, सर्वं च तृणमर्जुनमिति भागुरिः । ( तृण्या ) पाशादित्वाद्यत् ( पाशादिभ्यो यः ) । ( नड्या ) नामतद्वत् ॥ १६८ ॥ तृणाद्याकारवत्त्वादुपमाने गुल्मादयः । एवं तु

ऋक्षाच्छभल्लभाल्लूका गण्डके खड्गखड्गिनौ ।
लुलायो( पो ) महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥

स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ।
सृ( शृ )गालो वञ्चकः क्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥

ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ।
त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ६ ॥

श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।
वातप्रमीर्वातमृगः कोक ईहामृगो वृकः ॥ ७ ॥

मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।
ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥

कदली कन्दली चीनश्चमूरुप्रियकावपि ।
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥

---

हिनस्ति भल्लुकः, लक्ष्ये तु ( भल्लूकः ), दधति कुहरभाजामत्र भल्लूकयूनामिति ( उ० राम० ) । ऋक्षति ( ऋष्णोति ) ऋक्षः । अच्छ आभिमुख्येन भलति(ते) अच्छभल्लः, अच्छेत्याभिमुख्यार्थेऽव्ययम् । भालयति॰ ( ते ) भाल्लूकः । भल्लूकोऽपि । गण्डति सहन्यते गण्डकः । खडति भिनत्ति खड्गः । खड्गं शृङ्गमस्यास्तीति खड्गी । वार्ध्रीणसोऽपि । लुलति पङ्के लुलायः । महति मह्यते येन वा महिषः । महोऽपि । वाहं हयसमूहं द्वेष्टि वाहद्विषत्, द्विषोऽमित्रे ( सू० ) इति शतृप्रत्ययः । वाहद्विषमित्येके । घर्मार्तः कं जलमासरति कासारः, ईषत्सरति वा महाकायत्वात् । सीरिभिर्हलैस्तिभेति सीरिभः कुटुम्बी तस्यायं सैरिभः । रजस्वलोऽपि ॥ ४ ॥ शिनोति शिवा, शकुनावेदिनी वा, शृगालेऽपि स्त्रीलिङ्गः, यच्छाश्वतः– शिवः कीलः शिवा क्रोष्टा भवेदामलकी शिवा । गां मिनोति मीनाति वा गोमायुः । मृगान् धूर्वति मृगधूर्तः । असृगालाति सृगालः, सरति सृजति वा । क्रोशति क्रोष्टा । फे– इत्यव्यक्तं रौति फेरुः फेरवश्च । जमति जम्बुकः सर्वभक्षत्वात् । फेरण्डोऽपि ॥५॥ अवत्याखुभ्य ओतुः । विशन्– आलात्यसून् विडालः, बिलालो वा, बिलान्यरति पर्याप्नोति वा, बिलति भिनत्ति– अ.लून्वा, विड् आक्रमस्यास्त्विन्याद्वा, विड आक्रोश इत्यस्माद्वा । आखुभ्यो गृहं मार्ष्टि मार्जारः । वृषानाखून्दशति वृषदंशः । जलेशयादन्या निलोया गोधेयम्, धद्दगोधायां जातो जात्यन्तरमित्येके । ( गौधेर इ० ) गोधायाढ्रक् ( सू० ), आरगुदीचाम् ( सू० ), शुभ्रादित्वाड्ढक् ( सू० ) ॥ ६ ॥ श्वानं विध्यतीति श्वावित्, नहिवृतिवृषिव्यधीति ( सू० ) दीर्घः । शलति शल्यानि किरति वा शल्यको दिरेखयः । शलकोऽ[ लो ]ऽपि । तस्य लोम्नि शलाकाख्ये, यन्मालाभाविच्छलाकाँ शलली, शल गतौ । वातं प्रमिमीते ( वातप्रमीः ), वाताभिमुखधावनात् । कोकते गृह्णाति कवते याति वा कोकः । ईहा मृगस्येवास्य ईहामृगः, ईहां मृगयते वा । ईहां वर्क्तेते– ईहावृक एवैकदेशेन वृक इत्युच्यते । आरण्यः श्वेत्येके । वृक वृक आदाने ॥ ७ ॥ मृग्यते व्याधैर्मृगः । कौ रङ्गति कुरङ्गः । वातमयते वातायुः, वातं शुष्कमयते वातायुरित्येके । ह्रियते गीतेन हरिणः । अजिनस्य योनिः । ( ऐणेयं ) विकारेऽवयवे वा, एण्याढञ् ( सू० ) । ( ऐण ) विकारादौ, प्राणिरजतादिभ्योऽञ् ( सू० ) । ऐणेयमैणं च वाच्यलिङ्गौ ॥ ८ ॥ के दलति कदली, कन्दे लीयते कन्दली, दमन्ती । चिनोतीति चीनः । चमति चमूरुः । प्रीयते प्रियकः । समूरुं( र्व्य )ति समूरुश्चित्रवर्णः । एते चर्मस्तुत्युपयुक्ताः ॥ ९ ॥ अमी

व्याघ्राटस्तु भरद्वाजः खञ्जरीटस्तु खञ्जनः ।
लोहपृष्ठस्तु कङ्कः स्यादथ चाष किकीदिवि( वः ) ॥ १६ ॥
कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रक ।
दार्वाघाटोऽथ सा( शा )रङ्गः स्तोककश्चातकः समाः ॥ १७ ॥
कृकवाकुस्ताम्रचूड कुक्कुटश्चरणायुध ॥ १८ ॥
चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः ।
पुमपत्ये चाटकेरः स्त्र्यपत्ये चटकैव सा ॥ १९ ॥
कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ ।
वनप्रियः परभृत कोकिलः पिक इत्यपि ॥ २० ॥
काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २१ ॥
द्रोणकाकस्तु काकोलो दात्यूह कालकण्ठक ।
आतापि( यि )चिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ २२ ॥

---

शाम्य । खञ्जतीति खञ्जन । लोहवत् पृष्ठमस्य । कङ्कत कङ्क । चयति चाष । किकीति दीव्यति, वाशने किकीदिविः, द्वे नामनी इत्येके, किकिदीविरित्यन्य ॥ १६ ॥ के लिङ्ग तु॰ास्य कलिङ्ग । भृङ्ग- वत्कृष्णपक्षा ( भृङ्ग ) । धूमवानिवाटति धूम्याट, धूम्र आटश्च पदैकदेशत्वात् । शतं बहव पत्राणि पक्षा अस्य शतपत्र । दार्वाहन्ति दार्वाघाट, दारुण्याहनोऽणन्यस्य च टः संज्ञा- याम् ( वा॰ ) । सरति सारङ्ग, सङ्- शारङ्ग इति वा यूयक॰( चा )रित्वात् । स्तोकं कायति वाशने याचते वा स्तोकक । चतति याचते चातक । जलयाचिप ॥ १७ ॥ कृकेण शिरोग्रीवेण वक्ति कृकवाकु । कुक्कुवारवेण कुकते कुक्कुट । शिव कालज्ञश्च ॥ १८ ॥ चटति भिनत्ति- आहारं चटक । के शिरो हुनाति चलयति कलविङ्क । ( चटका ) जातावनट्प् ( सू॰ ), भिक्षादित्वाभाव ( क्षिप- कादेर्नाच ) । ( तयो ) चटकस्य चटकायश्चापत्य पुमान्- चाटकेर, चटकाया ऐरक् ( सू॰ ), च- टकेति पुमपत्ये ( चटकेति वा यम् ) । सा च तदपत्य च तत्, स्त्रियामपत्ये लुगवक्तव्य ( वा॰ ), टाबन्तादितष्टक्‍ ( सू॰ ) इति न्याय । इत्यनेन सामानाधिकरण्यात् ॥ १९ ॥ कर्कमिति रटति । केति च रटति वाशने ( करेटु ) । कृ इति कणति कृकण नयति वा कृकण । कमिति करोति वाशते क्रकरः । परभृत कार्यनिष्पत्तान् । कोकते । कल गृह्णाति कोकिल । आरक्षायति पिक । कलकण्ठस्तव्वाग्र ॥ २० ॥ कमव्यक्तं कायति वक्ते वा लैन्यात्काक । कति रटति करट । नास्ति रिष्टं हिंसास्यामृतभुक्त्वादरिष्ट । बलिभि पुष्टो वैश्वदेवभागहर( गृहे )न्वद् बलिपुष्ट । सकृत्प्रजायते सकृत्प्रज, एकगर्भप्रसवत्वात् । ध्वाङ्- क्षति ध्वाङ्क्ष । आत्मन स्वनाम्नो घोषो शब्दोऽस्मदार, कर्केति वाशनात् । परान् पिकान् बिभर्ति परभृत् । बलि एव बलिभुक्, प्रशादिवत्वात् ( सू॰ ), वयते व । एकाक्षि चिरजीवी मौकुलिर्द्विस्टश्च ॥२१॥ ( द्रोणकाक ) वृद्धकाकादिकाको वा, यदाह – द्रोणकाको दग्धकाको वृद्धकाको वनाश्रय, हुत हिंसया, द्रोणोऽपि । द्विर्नित्य तृतीय वा रूपं वहति दित्यात्, तन्त्वादय दात्यूह, देविकाशिंशपेत्यत्वम् ( सू॰ ) । कर्म कण्ठेऽस्य कालं कण्ठम् रोमेन्द्रिया यस्य कालकण्ठ कालकण्ठक । जलरशो( यो )पि । गिरि- वर्तोऽपि गनचिह्न । अन्तरावनर्मो । चिल्लति चिल्ल, चिल्ल शैथिल्ये । दक्षते दक्षाय्य, स्वस्थिनृ- दिगृहिभ्यश्च ( उ॰ ), तस्येदम् ( तदिदम् ) । गृध्यति लाभ गृध्र । कीर्त्युदग्राति कीर । शुको नव्यात्, गर्भवेद । प्रियदर्शनोऽपि ॥ २२ ॥ कुकते कुह । ( क्रौञ्च ) प्रज्ञादिवत्वात् ( सू॰ ),

कुङ् क्रौ( क्रु )ञ्चोऽथ बकः कह्व पुष्कराह्वस्तु सारसः ।
कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २३ ॥
कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ ।
हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २४ ॥
राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।
मलिनैर्मल्लिकाक्षा( ख्या )स्ते धार्तराष्ट्राः सितेतरैः ॥ २५ ॥
शरारिराटिराडि( डि )श्च बलाका बिसकण्ठिका ।
हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥ २६ ॥
जतुकाजिनपत्रा स्यात्परोष्णी तैलपायिका ।
वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ २७ ॥
पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका ।
दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः ॥ २८ ॥
भृङ्गारी चीरुका चीरी झिल्लिका च स्त्रियामिमाः ।
समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः ॥ २९ ॥

स्त्रियामजादित्वाट्टाप् क्रौञ्चा । वक्ति बकः, न्यङ्क्वादि ( सू० ) । बकोटोऽपि । केन के जलं वा ह्वयते कह्वः । सरति मत्रः सारसः लक्ष्मणाह्वयः । विलीनाङ्गो दीर्घजङ्घश्च । कोरते वाशते कोकः । चकते चक्रः । चक्रेति वाक्- आख्यास्य चक्रवाकः । रथाङ्गं चक्रमाह्वयो नाम चास्य रथाङ्गाह्वयो रथाङ्गनामा च ॥ २३ ॥ कदम्बस्याय सघचारित्वात्कादम्बः । कलो मधुरवाग्हंसः ( कलहंसः ) । उच्चैः क्रोशत्युत्क्रोशः । कुरति कुररः, कुर शब्दे, कुरेति शब्दं राति वा । हन्ति गच्छति हंसः । श्वेता गरुतः पक्षा अस्य श्वेतगरुत् । चञ्चुचक्राकाराङ्गो वृत्तत्वात्, चक्राङ्क इत्येके । मानसाख्ये देवसरस्याकोऽस्य मानसौकाः ॥ २४ ॥ चञ्चुसहितैश्चरणैरिति लक्षणे तृतीया । मलिनैश्चञ्चुचरणैस्ते सिता मल्लिकाक्षाः, [ मल्लिकाकाराक्षाः ] शुक्लापाङ्गत्वात् । कृष्णैश्चञ्चुचरणैर्धृतराष्ट्र- अमात्ये भवा धार्तराष्ट्राः, राजहंसेभ्यो न्यूनत्वात् ॥ २५ ॥ शृणन्त्येनां शरारिः । अतत्याटिः । अटत्याडिः । एताः स्त्रियाम्, बलाहकान् कायति बलेनाकति याति वा बलाका । बिसमिव कण्ठोऽस्याः, बिसकण्ठिकेत्येके । शारिका गोराटी पीतपादेति च वाच्यम् । व्रियते वरटा, स्त्रीविषयत्वाज्जातेर्ङीष् नास्ति, वरलापि । याषिदित्येव, लक्ष्मणीत्येके, अत एव लक्ष्मणारयोसौ ॥ २६ ॥ जातुषत्वाज्जातेर्ङीष् नास्ति जतुरिव कृष्णपिङ्गलत्वाज्जतुका । अजिन पत्त्राणि पक्षा अस्या अजिनपत्त्रा चर्मवटकत्वात् । परमुष्णत्वमस्याः शीतापहतत्वात्, परं विरुद्ध वा तेजसोऽन्धकारात् ( परोष्णी ) । तैलं पिबतीति तैलपायिका, तैलाख्या-'अजिनपक्षत्वात् । मुखविष्ठा वल्गुलिका निशाटनी च । चतु सञ्ज्ञे( ज्ञा )यां, नित्यमात्यत्रिकासात् । वृणोति वर्वणा । मक्षन्ति दुःखयन्त्यस्यै मक्षिका । सरन्ती घातयति सरघा ॥ २७ ॥ पतति-अपतङ्गति वा पतङ्गिका । पुत्कुत्सितं तनोति पुत्तिका, मधुमक्षिकाभेदोऽयं, यन्निमि – माक्षिकं तैलवर्णं स्याद् घृतवर्णं तु पौत्तिकम् । भ्रामरं तु भवेच्छुक्लं क्षौद्रं तु कपिलं भवेत् ॥ दशति दंशः । ( दंशी ) दंशजातीया, जातेरिति ( सू० ) ङीष् । गन्धयतेऽर्दयति गन्धोली, गन्धाल्येत्येके । वृणोति वरटा तैलाख्या ॥ २८ ॥ आकृत्या भृङ्गमियर्ति भृङ्गारी । चीति रौति चीरुका । चीति रिणाति चीरी । झिल्ली वाद्यभेदस्तत्तुल्यशब्दा झिल्लिका चकाराद्या, केऽण ( सू० ) इति ह्रस्वः, झिल्लिकार्ति( झा )रुती-नामिति तु लक्ष्यम् । शलति शमं लभते वाग्नौ शलभः । खे द्योतते खद्योतः । ज्योतिषेङ्गति चलति ज्योतिरिङ्गणः । इन्द्रगोपको ज्योतिर्माली कीटमाणिक्यं च [ -माणश्च ] ॥ २९ ॥ मधु व्रतयति भुङ्क्ते

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ ३० ॥
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावल शिखी केकी मेघनादानुलास्यपि ॥ ३१ ॥
केका वाणी मयूरस्य समौ चन्द्रकमेचकौ ।
शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३२ ॥
खगे विहगविहङ्गविहंगमविहायसः ।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३३ ॥
पतत्रि(त्रि)पत्रिपतगपतत्पत्त्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्त्रयः ॥ ३४ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।
तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३५ ॥

---

मधुव्रत । अलसर्ता, अलिश । द्वौ रेफौ नाम्न्यस्य द्विरेफ । भजति बिभर्ति वा भृङ्ग । षट् पदानि चरणा अस्य षट्पद । भ्रमति भ्रमर । चञ्चरीकभसल(ने)न्दिन्दिरोलम्बा देश्याम् ॥ ३० ॥ मीना-स्यहीन् मयूर । बर्हमस्यास्ति (वा०ण), फल्बर्हाभ्यामिनन् (वा०) । शिखास्त्यस्य शिखावल, दन्तशिखात्संज्ञाया (सू०) वलच् । शिखा, व्रीह्यादित्वान् (सू०) । मेघनादमनुलसति नृत्यति— अवश्यं मेघनादानुलासी । चन्द्रकी शुक्लापाङ्गश्च ॥ ३१ ॥ के मूर्ध्नि कायति केका । चन्द्रमतिक्रान्तिश्चन्द्रकः । मेचको मिश्रवर्णत्वात्, यत्कात्य— बर्हिकण्ठसम वर्णं मेचकं ब्रुवते बुधा । मयूरस्यैवेव, अन्यत्रो-पचारात् । शिखामर्दयतीति शिखण्ड । पिच्छ[य]ति पिच्छम् । बहति नृत्येनोर्ध्वीभवति बर्हम् । प्रच-लाकोपि । कलापो नानार्थ ॥ ३२ ॥ खे गच्छति खग, अन्यत्रापि दृश्यते (वा०) इति ड । विहा-यसा गच्छति, गमे सुपिवाच्यः (वा०) खच्चक्तव्य, विहायसो विहश्चेति (वा०) डे, खच्-डिद्वा (वा०) । क्षिपिहीते विहाया, यच्छाश्वत— विदुर्विहायस व्योम पक्षिणश्च विहायस । शक्नोतीति, शकेरुनोन्तोन्त्युनय (उ०) । पक्षा सन्त्यस्य पक्षी । द्विर्जायत इति द्विज ॥ ३३ ॥ पतत्राणि विद्यन्ते येषु ते पतत्रिण । पतन्त्यनेनेति पत पक्ष, पुंसि संज्ञायां घ (सू०), पतं गच्छति पतग । पतति पतन् । पत्राणि पक्षा रथोस्य पत्ररथ । नग— ओकोस्य नगौकाः । वाजो वेगोस्यास्तीति वाजी । विकिरति भक्ष विकिर— विष्किर, विष्किर शकुनिर्विकिरोवा (सू०) । वाति वयति वा वि, वेनाडित् (उ०) । पतत्राणि सन्त्यस्य पतति वा पतत्री, पतेरत्रिन् (उ०), पतेरत्रिरिति भाष्या पतत्रि प्रत्ययस्येदन्त मन्यते ॥ ३४ ॥ पतितुमिच्छन् पित्सन्, सनिमिमेति (सू०) इस्—इदभ्यासलोपौ । नभसा गच्छति नभसंगम, गमे सुप्युपसंख्यानात् खच् (वा०), वाचंयमपुरंदरौ च (सू०) इति चकारान्मागम, अलविचमितमिरभिलभिनभितपिपनिरनिपणिसहिभ्योऽसजिति (उ०) नभ (भस)नम्दोस्त्रीक्लेके । पतङ्गो नानार्थे । एते पक्षिविशेषाः । हरिते वर्णे मतो हारीत । मज्जति मद्गु-र्जलकाक, भ्रस्जादि (सू०) । काण्डे भव कारण्ड पक्षस्तेन वाति कारण्डव । प्लवते प्लव ॥ ३५ ॥

तित्तिरि कुक्कुभो लावा जीवञ्जीवश्चकारक ।
कायष्टिट्टिभ काक ककरो( वर्तका ) वर्त( र्ति )कादय ॥ ३६ ॥
गरुत्पक्षच्छदा पत्त्र पतत्त्र च तनूरुहम् ।
स्त्री पक्षति पक्षमूल चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३७ ॥
प्रडीनोड्डीनसडीनान्यता खगगतिक्रिया ।
पेशीकोशो द्विहीनण्ड कुलायो नीडमस्त्रियाम् ॥ ३८ ॥
पात पाकार्भको डिम्भ पृथुक शावक शिशु ।
स्त्रीपुसौ मिथुन द्वन्द्व युग्म तु युगल युगम् ॥ ३९ ॥
समूहनिवहव्यूहसदोहविसरव्रजा ।
स्तोमाघनिकरव्रातवारसघातसचया ॥ ४० ॥
समुदाय समुदय समवायश्चया गण ।
स्त्रिया तु सहतिर्वृन्द निकुरम्ब कदम्बकम् ॥ ४१ ॥
वृन्दभेदा समर्वर्ग सघसार्थौ तु जन्तुभि ।
सजातीयै कुल यूथ तिरश्चा पुनपुसकम् ॥ ४२ ॥

---

तित्तिशब्द राति तित्तिरि । कुकशब्द कराति (भ षते) कुक्कुभ । लाति [ लावयात ] लूयत वा लाव । चावेन सहचरण जीवति जीवञ्जीव बाहुलकात्खच । चकन( ात ) ज्योत्स्नया तृप्यति चकार । भाका यजति कायाष्ट शिखरी । टिट्टिशब्द भषत टिट्टिभ । कुकते [ काकत ] काक । कात कराति ककर । वतत इत ( वतक ) वतकारकुनौप्र चा ( वा० ) इति मधु पक्ष वर्तिका । आदिशब्दा त्व पञ्जल दय ॥ ३६ । गिरति स गरुत् । ( पक्ष ) पच परिग्रह । छद्यतनेनाङ्ग छद, छादर्घे ( सू० ) इति ह्रस्व । पतत्यनन पत्त्रम् । पतत्त्त्र यत पतत्त्रम । मल पक्षात्त ( सू० ) । चञ्चति चलति चञ्चु । त्रुट्यति त्रोटि । तुण्ड च ॥ ३७ ॥ प्रकृष्टमूर्ध्व सहत वा डयन स्वान्यओ न्त ( ग० सू० ) ( आदितश्च ) इति निष्ठानत्वम् । एना इात दि डानाद्यपलक्षणथ । पर्शीना मासखण्डाना कोश । अमति न सरयस्मादण्डम् । तस्य सञ्ज्ञा इत गौडा । का लीयत कल्यत कुलमति वा कुलाय । निलीयत स्मन् नीड ॥ ३८ ॥ पुनाति पात । प त्यन पवति स्तनौ वा पाक । अर्भ्यत( अर्थ्यते ) श्राद्ध प्राप्यतेऽर्भक । डयति( त ) डिम्भ । प्रथत वधत पृथु कायत वा पृथुक । श्यात शवति वा शावक । शिनाति स्नहन शत वालर्थं शिशु । स्त्री च पुमाश्च स्त्रीपुमौ अचतुरविचतुरति ( सू० ) साधु । मथत सगच्छते मिथुनम् मिथृमधृ सगमन । द्वन्द्वमिति द्वन्द्वरहस्यमर्यादात ( सू० ) साधु, यत्कालिदाम द्वन्द्व नि भ त क्रियया विवतु । युज्यते धामत्र्त्या युगम् । धमवृत्तौ तु युग लाति युगल मत्वथाया वा लच ( सि म ादभ्यश्च ) । ३९ ॥ समूह्यत टौक्यत समूह । निवहति निवह । व्यूहत व्यूह । सदुह्यत प्रपूयत सदोह । विस्रियत विसर । व्रज्यत व्रज गोचरसचरवहव्रजोत (सू०) साधु । स्तयत स्ताम । आघ्नत ओघ न्यङ्क्वादि ( सू० ) । निकीर्यत निकर । व्रियते वार । सहन्यत सघात हाहन्तारत ( सू० ) घ । सचयत सचय ॥ ४० ॥ समुदयन समुदाय अयत घेन । शाद्युन्य एणाइन्न । समवयत समवाय । चायत चय । गण्यत गण । वृणाति वृन्दम् । निकुरति निकुरम्बम् । कदम्बयातक्रात कसरसचया मकवान् ( कदम्बकम् ), कु रितमम्वते वा ॥ ४१ ॥

पशूनां समजोन्येषां समाजोथ सधर्मिणाम् ।
स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४३ ॥
कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।
गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ४४ ॥

इति सिंहादिवर्गः । ५ ।

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥

---

समूहविशेषा वक्ष्यन्त इति शेषः । सजातीयैः प्राणिभिरप्राणिभिश्च समूहो वर्गः, वृज्यते विजातीयेभ्य इति । प्राणिभिः समूहः ( संघः ), संहन्यते संघः, सङ्घोद्घौ गणप्रशंसयोः ( सू० ) इति साधुः, यथा गोसंघः, मेघसंघाद्युपचारात् । सरति सार्थोश्वगवृन्दम् । जन्तुभिरित्येव, कुल सस्थाने बन्धुषु च, (यथा) विप्रकुलम् । वृन्दमित्येव, यथा मृगयूथः, यु मिश्रणे ॥ ४२ ॥ संवीयते समजः, समुदोरजःपशुष्विति ( सू० ) अप् । पशुभ्योन्येषां वृन्द ( समाजः ), यथा श्रोत्रियसमाजः । ( सधर्मिणा ) समूह इत्येव, यथा श्रमणनिकायः, निचीयते निकायः, निवासचितिशरीरोपसमाधानेष्विति ( सू० ) घञ् कत्वं च । धान्यादेरुच्छ्रित वृन्द, पुञ्ज्यते पुञ्जः पूर्यते वा । रश्यते राशिः, रशि सौत्रो दीप्त्यर्थः । उत्कीर्यत उत्करः । कुट्यते कूटः ॥ ४३ ॥ कपोतादिसमूह एतानि वर्तन्ते, अनुदात्तादेरञ् ( सू० ) । आदिशब्दाल्लावकादि । शाय्यन्ते छेकाः पञ्जरादौ स्थाप्यन्ते । गृह्यन्ते गृह्यकाः, पदास्वैरीति ( सू० ) क्यप्, स्वार्थे कन् ॥ ४४ ॥

इति सिंहादिवर्गः । ५ ।

मनोरपत्यं मनुष्यो मानुषश्च, मनोर्जातावञ्यतौ षुक्च ( सू० ) । म्रियते मर्त्यः, स्वार्थे यत् । मानवः, तस्येदमर्थेऽण्, अपत्यार्थे अञ्यद्भ्यां बाधितत्वात् । नृणाति नरः, नॄ नये । पाति पुमान् । पञ्चभिर्भूतैर्जातः पञ्चजनः । पुरि पुरि शयनात्पूरणाद्वा पुरुषः । ( पूरुषः ) अन्येषामपीति ( सू० ) वा दीर्घः । नयति ना, नयतेर्डिच्च ( उ० ) इति ऋः ॥ १ ॥ स्त्यायत्यस्या गर्भः स्त्री । योति पुंसा ( योषति ) योषित्, हृसृरुहियुषिभ्य इतिः ( उ० ) । युष्यते ( योष ) त्यन्यं यौति वा योषा । नरीति, नृनरयोर्वृद्धिश्च ( ग० सू० ) इति शार्ङ्गरवादिपाठान्ङीन् । सीमन्तः केशवेशोस्त्यस्याः सीमन्तिनी । उह्यतेसौ भर्त्रा, वध्यतेनया भर्ता वा वधूः । प्रतीपं वक्रं पश्यति, शाङ्गीरवादिङीन् । वामा विपरीतलक्षणया सुन्दरत्वेन वा । वनति भजति वनिता । मह्यते महिला । तथाशब्दान्महेलापि, यद्वचनम्– अजयद् द्विरदः पासनयः पामहेलया । स्वप्नेपि मनसि स्पृशो न यः परमहेलया ॥ २ ॥ प्रशस्तान्यङ्गान्यस्याः अङ्गना, अङ्गात्कल्याणे ( ग० सू० ) इति पामादित्वान्न ( लोमादिपामादीति ) । बिभेति तच्छीला भीरुः, भियः क्रुक्लुकनौ ( सू० ) । कामयते कामिनी । वामे चापके लोचने अस्या वामलोचना । प्रकृष्टो मदः कामवेगोस्याः प्रमदा । मानः प्रणयकोपोस्या मानिनी । काम्यते कान्ता । लडति ला-( ल )यते वा ललना, लड विलासे, लल ईप्सायां वा । नितम्बिनी गुरुनितम्बा ॥ ३ ॥ विशेषा

सुन्दरी रमणी रामा कोपना सैव भामिनी ।
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः ।
पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।
पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
कृतसापत्न( त्नि )काध्यूढाधिविन्नाथ स्वयंवरा ।
पतिंवरा च वर्या च कुलस्त्री कुलपालिका ॥ ७ ॥
कन्या कुमारी गौरी तु नग्निकानागतार्तवा ।
स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ८ ॥
समाः स्नुषा जनी वध्वश्चिरण्टी तु सुवासिनी ।
इच्छावती कामुका स्याद् वृषस्यन्ती तु कामुकी ॥ ९ ॥

---

इत्येव । सुष्ठु– आद्रियते सुन्दरी । रमन्तेऽस्यां रमणी । रमते रामा, ज्वलादित्वाण्ण ( सू० ) । कुप्यति तच्छीला कोपना, क्रुधमण्डार्थेभ्यश्च ( सू० ) इति युच् । भामिनी, भाम क्रोधे । उत्तमा स्त्रीपर्याया । आरोहन्तेऽस्मिन्नारोहो नितम्बः, स वरोऽस्या वरारोहा । मत्ता इवेव काशते भाति मत्तकाशिनी, कर्तर्युपमाने ( सू० ) णिनिः । वरो वर्णोऽस्या वरवर्णिनी ॥ ४ ॥ नृपस्त्रीस्त्वेव । श्रीमहादेवीत्वे कृताभिषेका, यथा वासवदत्ता, मह्यते पूज्यते महिषी । पद्मावत्याद्याः, भोगोऽस्त्यासां भोगिन्यः । पत्युर्नो यज्ञसंयोगे ( सू० ) इति पत्नी । पाणिर्गृहीतोऽस्याः, बहुव्रीहेश्चान्तोदात्तात् ( सू० ) इत्यत्र पाणिगृहीतीत्यादिना ( वा० ) विशेष इति ङीप् । द्वितीया धर्मसहाया । सह धर्मोऽस्त्यस्याः सहधर्मिणी, यज्ञादौ सहाधिकारात् ॥ ५ ॥ भरणीया भार्या, संज्ञायां भृञः– ऋहलोर्ण्यत् ( सू० ) । जायतेऽस्यां पतिर्जाया, यन्मनुः– जायायास्तद्धि जायात्वं यदस्यां जायते पुनः । दारयन्ति दाराः, दारजारौ कर्तरि णिलुक् च ( वा० ) । अथशब्दात्पुंभूम्नोर्न पूर्वभावत्वम् । सहचरी च । कुटुम्बं पुत्रभृत्याद्यस्त्यस्याः कुटुम्बिनी । पुरं धत्ते पुरंध्री । पतिसेवैव व्रतं यस्याः सा पतिव्रता, यत्स्मृतिः– नास्ति स्त्रीणां पृथग्यज्ञो न व्रतमिति ॥ ६ ॥ कृतं सापत्नकं सपत्नीभावोऽस्याः ( कृतसापत्नका ) । अध्युपर्यूह्यते द्वितीया( अन्या )स्त्री अध्यूढा । अधिविन्दत्यस्यामधिविन्ना । स्वयं वृणीते स्वयंवरा, संज्ञायाभृतृवृजि इति ( सू० ) खच् । पतिं वृणुते पतिंवरा, खच् । व्रियतेऽनया वर्या, अवद्यपण्येति ( सू० ) साधु, वरमर्हतीति वा । कुलस्य संपादयित्री स्त्री ( कुलस्त्री ) ॥ ७ ॥ कनति कन्या, कनी दीप्तौ, अघ्न्यादिः ( उ० ), कन्यायाः कनीन च ( सू० ) इति लिङ्गाद् ङीप्– नास्ति । कुमारयति क्रीडति कुमारी कुत्सितो मारोऽस्या वा, अनूढत्वात् । अष्टवर्षा भवेद् गौरी दशमे नग्निका भवेदिति स्मार्तो विशेषो नास्ति । गौ( गु )रते गौरी । नजते नग्ना, ओलजी ओलस्जी व्रीडे । स्वार्थे नग्निका । अनागतमार्तवं रजः । ( मध्यमा ) अजाद्यतष्टाप् ( सू० ) । ( तरुणी ) वयसि प्रथमे ( सू० ) इति ङीप् स्यात्, नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ( वा० ) वा ङीप् । ( युवतिः ) यूनस्तिः ( सू० ) ॥ ८ ॥ स्नौति स्नुषा । जायतेऽस्यां जनी । वधूरी च ग्रामटिकावत् । चिरिणोति चिरिण्टी, चरति चरण्टीत्येके, वयस्यचरमे ( वा० ) इति ङीप् । सुष्ठु वसति सुवासिनी, स्ववासिनीति द्रविडाः । ( कामुका ) लषपतपदेत्युकञ् ( सू० ) । वृषमिच्छति, सुप आत्मनः क्यच् ( सू० ), अश्ववृषभयोर्मैथुनेच्छायामिति ( वा० ) असुक् । आनः, लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ( सू० ) इत्यादिना पद्यर्थेऽपि ( वा० ) । कामुकी ॥ ९ ॥ मञ्जुरतः– हित्वा लज्जाभये श्लिष्टा मदनेन

कान्तार्थिनी तु या याति संकेतं साभिसारिका ।
पुंश्चली चर्षणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च स्यादशिश्वी शिशुना विना ।
अवीरा निष्पतिसुता विश्वस्ताविधवे समे ॥ ११ ॥
आलिः सखी वयस्या च पतिवत्नी सभर्तृका ।
वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ॥ १२ ॥
शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ।
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ।
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ॥ १४ ॥
आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ।
उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥

---

मदन च । अभिसारयते कान्तं सा भवेदभिसारिका ॥ ण्वुलन्तोऽयं ( अभिसारिका ) । वासकसज्जा विरहोत्कण्ठिता खण्डिता विप्रलब्धा कलहान्तरिता तथा प्रोषितभर्तृका स्वाधीनपतिकेत्यन्याः सप्तान्वर्थन्वाभ दर्शिताः । पुमांसं चलयति पुंश्चली । चर्षति चेतश्चर्षणी, कृपेरादेश्च ( उ० ) । बध्नाति बन्धकी । कुलान्यटति कुलटा शकन्ध्वादिः ( वा० ), कुत्सितं लटतीत्येके । एति तच्छीला– इत्वरी चपला, इण्नश्जिसर्तिभ्यः क्वरप् ( सू० ) ॥ १० ॥ स्वेनेरितुं तच्छीला स्वैरिणी, स्वादीरेरिणोः ( वा० ) इति वृद्धिः । पांसुर्मालिन्यहेतुरस्त्यस्याः पांसुला । ( अशिश्वी ), सख्यशिश्वीति भाषायाम् ( सू० ) इति साधु । न विद्येते वीरौ पतिपुत्रावस्या अवीरा । विश्वसिति स्म विश्वस्ता । विगतो धवो भर्तास्या विधवा ॥ ११ ॥ अल( आलय )त्यालिः, यच्छब्दाम्भसः– आलि सखी सेतुरालिरालिरावलिरिष्यते । समानं ख्याति सखी । वयसा तुल्या वयस्या, नौवयोधर्मेति ( सू० ) यत् । सध्रीची च । ( पतिवत्नी ) अन्तर्वत्पतिवतोर्नुक् ( सू० ), ङीप् च । ( पलिक्नी ) असितपलितयोर्न ( वा० ), छन्दसि क्नमेके ( वा० ), भाषायामपीष्यत इति ङीप् च । प्रजानातीति प्रज्ञा, इगुपधेति कः ( सू० ) । ( प्राज्ञी ) प्रज्ञादिभ्यश्चेति ( सू० ) स्वार्थेऽण् । प्रज्ञास्त्यस्याः ( प्राज्ञा ), प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ( सू० ) ॥ १२ ॥ ( शूद्री ) पुंयोगादाख्यायाम् ( सू० ) इति ङीष् । शूद्रजातीया स्त्री शूद्रा, शूद्रा चामहत्पूर्वा जातिः ( वा० ) इति– अजादित्वाट्टाप् । आभीरजातीया महाशूद्रस्य स्त्री च, जातिलक्षणे पुंयोगे च ङीष् । वैश्यभेद एवाभीरो गवाद्युपजीवी । अन्यस्तु महती चासौ शूद्रा च महाशूद्रा ॥ १३ ॥ स्वयं पुंयोगं विना । अर्यक्षत्रियाभ्यां वा स्वार्थे ( वा० ) इति ङीषानुकौ, पक्षे टाप्, योपधत्वाज्जातिलक्षणो ङीष्– नास्ति । स्वयमित्येव । उपेत्याधीयतेऽस्याः, अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ( वा० ) इति घञ् वा च ङीष् । स्वयं मन्त्रव्याख्यात्री आचार्या । स्वतो जातिविरहः, योपधत्वाज्जातेर्ङीष्–नास्ति ॥ १४ ॥ ( आचार्यानी ) इन्द्रवरुणेति ( सू० ) ङीषानुकौ आचार्यादणत्वं चेति वक्तव्यम् ( वा० ) । पुंयोग इत्येव, ( उपाध्यायानी ) उपाध्यायमातुलाभ्यां वेति ( मातुलोपाध्याययोरानुग्वा ) पक्षे ङीषनुकौ । पुं सम्प्रेषमे, उभयव्यञ्जना पोटा नपुंसकाख्या ॥ १५ ॥

वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ।
जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
स्त्री नग्निका कोटवी स्याद् दूतीसंचारिके समे ।
कात्यायन्यर्धवृद्धा या का( क )षायवसनाधवा ॥ १७ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी ॥ १८ ॥
वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः ।
सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे ॥ १९ ॥
विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला ।
स्त्रीधर्मिण्यपि चात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ।
श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ॥ २१ ॥

---

( वीरपत्नी ) नित्यंसपत्न्यादिषु ( सू० ) इति नान्तत्वाद्– ऋन्नेभ्योङीप् ( सू० )। वीर सूतवती वीरसूः सत्सूद्विषेति ( सू० ) क्विप् । वीरप्रसूर्जगति भार्गवरेणुकैव ( वा० रा० ) वीरस्य प्रसूर्मातेत्यर्थः । जीवन्तोका तु जीवसूः । वोढ्र तु कटहारिणी । जनयितुं प्रवृत्ता सा प्रजाता । ( प्रसूतिका ) सूतकापुत्रिका' वृन्दारकाणावा ( वा० ) इति पक्षे– इत्वम्, अस्याग्रहणाद्योगेपि ङीप् नास्ति ॥ १६ ॥ विवस्त्रा योषिन्मुक्तकेशीत्यागमः । कोटेन लज्जावशात्कुटिलत्वेन वेति यानि कोटवी । दूयन्तेऽस्या मौस्तर्याद् दूती । संचारयति ( संदेश ) प्रापयति सचारिका । कतस्यापत्यमिव कात्यायनी, ऋषिपत्न्याकारत्वात् । त्रिलक्षणेयं, कषायेण रक्त वस्त्रं शुद्धत्वादस्या काषायवसना, अथवा– अपुंस्का रण्डेत्यर्थः ॥ १७ ॥ शिल्पं प्रसाधनादि तेन या परवेश्मान्युपजीवति, स्ववशा स्वायत्ता, एकायत्ता न भवतीत्यर्थ' । सह–एर प्रेरण भरते सैरन्ध्री, चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री स्ववशेति चेति कात्यः । असितपलितयो क्नम् ङीप् च । प्रादेपैष्ययोर्वृद्धि' ( प्रादूहोढोढ्येषैष्येषु )। द्वे वाक्ये इत्येके तन्न, यन्मुनि·– असिक्नी स्यादवृद्धा या प्रैष्यान्त पुरयोगिता ॥ १८ ॥ वारे राजदेवादिसेवाक्रमे स्त्री वारस्त्री । गण' पेटकोऽस्त्यस्या', गणपतीश्वरानीश्वरौ वा गणिका । वेशो वेश्यावाटे भवा वेश्या । पण्यस्त्री पणस्त्री च । वारे सेवाक्रमे मुख्या ( वारमुख्या )। कुट्टयति कुट्टनी । शं श्रेयो भालयाति शंभ श्रेयोयुक्तं लाति वा शम्भली । चुन्दी देश्याम् ॥ १९ ॥ विप्रश्नो दैवप्रच्छनं शुभाशुभेक्षणं वास्त्यस्याः ( विप्रश्निका )। दैव शुभाशुभं कर्म जानाति दैवज्ञा, अन्त पुरस्यापुरप्रवेश्यत्वात् । रजोऽस्त्यस्या रजस्वला, रजःकृष्यासुतीति ( सू० ) वलच् । स्त्रीधर्मो रजोऽस्त्यस्याः स्त्रीधर्मिणी । अत्रेरपत्यमात्रेयी । ( मलिनी ) मलिनात्वजसिङीप् ( वा० ), मलादिमन्तत्वा ङीप् ॥ २० ॥ ऋतु रजोऽस्त्यस्या ऋतुमती । उदकात्संज्ञायां यति उदक्या, उदकमेंहतीति । पुष्पितेति माला । पुष्पवत्यपीरिति प्राच्याः पेठु, अव्यने रक्ष्यतेऽन्येभ्योऽसौ', अविनृस्तृतन्त्रिभ्यई: ( उ० )। अविरात्रेयीत्येके, यत्कात्यः– अवि स्त्रीधर्मिणी विद्यादिति । पुष्पं मुरफलहेतुत्वाद्रज । ऋतुरेवार्तवम्, ऋतु' स्त्रीरजोऽत्र, ऋतौ गर्भग्रहणकाले भवं वा, ऋतुः प्राप्तोऽस्य वा । ( स्पृहिगृहिपतिदयि )निद्रातन्द्राश्रद्धाभ्यआलुच् ( सू० ) । दोहद गर्भिण्यभिलाषोऽस्त्यस्या दोहदवती । निष्क्रान्ता कलाभ्योऽशुद्धिभ्यो निष्कला जीर्णा तु ॥ २१ ॥ आपन्नं गृहीतं सत्त्वं गर्भोनयापन्नसत्त्वा । गुर्व-

आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी ।
गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः ।
स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥
कानीनः कन्यकाजातः सुतोऽथ सुभगासुत ।
सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
पैतृष्वसेय स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ।
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥ २५ ॥
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ।
कौलटेयः कौलटेरो भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्या कौलटेयोऽपि चात्मजः ।
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥

---

गर्भोऽस्या गुर्विणी, सौख्यादित्वादिनिः ( सू० ) । गुर्वीति च भागुरिः । अन्तर्विद्यतेऽस्याः ( अन्तर्वत्नी ), अन्तर्वत्पतिवतोर्नुक् ( सू० ) । गणिकानां समूहो गाणिक्यं, गणिकायाश्चेति वक्तव्यं (वा० ) इति यञ् गर्भिणीनां समूहो गार्भिणं, इनण्यनपत्ये ( सू० ) इति प्रकृतिभावः ( नस्तद्धिते इति टिलोपे प्राप्ते ) । युवतीनां समूहो यौवतं, युवत्या अपुंवदिति गणपाठात् ( भिक्षादिषु ), भस्याढे तद्धिते ( वा० ) इति पुंवद्भावो नास्ति ॥ २२ ॥ पुनर्भवति पुनर्भूः । दिधेरिव वाच्या भवति दिधिषूः । द्वौ वारौ द्विरूढा संस्कृता, यदाहुः—अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः (याज्ञ०) । मनुस्त्वन्यथाह— ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता ॥ तस्याः पुनर्भ्वाः पतिः, किं च— पुनर्भूपतिरुक्तश्च पुनर्भूर्दिधिषूस्त्वन्येऽप्यूदन्ताः, दिधिषूमिच्छत्यात्मन इति क्यच् ( सुप आत्मनः क्यच् ), क्विप् ( अन्येभ्योऽपि दृश्यते ) । अग्रेऽनन्यभार्यमप्रधानं दिधिषूर्यस्य सोऽग्रेदिधिषूः, समासान्तविधिरनित्यः ॥ २३ ॥ ( कानीनः ) कन्यायाः कनीन चेत्यण् ( सू० ) । ( सौभागिनेयः ) कल्याण्यादीनामिनङ् ( सू० ) इति ढगिनङौ । एवं दौर्भागिनेय इत्यादि, हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ( सू० ) इत्युभयपदवृद्धिः, उत्तरपद- अनुशतिकादीनां चेति ( सू० ) । सुत इत्येव, परस्त्री कल्याण्यादिः ॥ २४ ॥ ( पैतृष्वस्रीय. ) पितृष्वसुश्छण् ( सू० ) । ( पैतृष्वसेय ) ढकि लोपः ( सू० ) इति ज्ञापकाद्— ढक्— अन्त्यलोपश्च । सुत इत्येव, मातृष्वसुश्च ( सू० ) इति छणि मातृष्वस्रीयः, ढकि लोपः ( सू० ) इति ढकि मातृष्वसेयः । विरुद्धाया मातुरपत्यं वैमात्रेयोऽसोदर्यो भ्राता, शुभ्रादित्वात् ( सू० ) ढक्, स्त्रीभ्यो ढक् ( सू० ) इत्यत्र स्त्रीप्रत्ययग्रहणात् । मामातुरस्तुभयमातृकः ॥ २५ ॥ बन्धक्या अपत्यं, कल्याण्यादीनामिनङ् ( सू० ) इति ढगिनङादेशः । बन्धून्— लाति बन्धुला । कुलटाया अपत्यं, स्त्रीभ्यो ढक् ( सू० ) । ( कौलटेरः ) क्षुद्राभ्यो वा ( सू० ) इति ढ्रक् ॥ २६ ॥ सा हि भिक्षार्थिनी कुलान्यटति, कुलटायां वा ( सू० ) इति ढगिनङौ, पक्षे ढगेव क्षुद्रत्वाभावात्, अङ्गहीनत्वहीना हि क्षुद्रा । तनोति कुलं तनयः । सूयते सूनुः । सुतिः सुतः । पुन्नाम्नो नरकात् त्रायते पुत्रः, पुनाति वा, पुवो ह्रस्वश्च ( उ० ) इति क्त्रः । दारकदायादौ च ॥ २७ ॥ आ मत्रादयः स्त्रियां वृत्ताः दुहितृवाचकाः । गौरादौ पुत्री । दोग्धि पितरौ दुहिता । ( तयोः

आहुर्दुहितरं सर्वेपत्यं तोकं तयोः समे ।
स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ २८ ॥
जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।
ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥ ३० ॥
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।
पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥ ३१ ॥
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ।
स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ॥ ३२ ॥
पितामहः पितृपिता तत्पिता प्रपितामहः ।
मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥

---

समे ) पुत्रे दुहितरि च सामान्येन वर्तते । अपतनमपत्यं, अपति माध्यपत्यम् । स्तूयते तोकम् । सततिः सन्तान , नन्दनाद्दुहिता , [ तन्तुश्च ] । उरसा निर्मिते यचेति- अण्यतौ ( उरसोयच्च, उरसोण्च ) । तनोति कुलं तात , स्तथऽण् । जनयति जनक । पाति पिता । वप्ता च ॥२८॥ या जनित्री त्रिलोक्या इति स्वन्नर्भावितण्यर्थे चन् । प्रसूयते प्रसू । मान्यस्यां गर्भो माता । भगं कल्याणमस्त्यस्या भगिनी । सुष्ठ्वस्यते स्वसा, सावसेर्ऋन् ( उ० ), नषट्स्वस्रादिभ्य ( सू० ) इति ङीप् नास्ति । न नन्दति भ्रातृजाया ननन्दा, नञिचनन्दे ( उ० ) इति ऋन् । न पतन्त्यनया कुलं नप्त्री । पुत्रस्यापत्यं पौत्री सुतस्यात्मजा ॥ २९ ॥ यतते स्पर्धया याता, यतेर्वृद्धिश्च ( उ० ) इति ऋन् । ( भ्रातृजाया ) ऋतोविद्यायोनिसम्बन्धेभ्य ( सू० ) इति षष्ठ्या अलुगनास्ति, समासासमासात्, यथा- द्रक्ष्यसि भ्रातृजायाम् ( मेघ० ) । ( मातुलानी ) इन्द्रवरुणेति ( सू० ) ङीपानुकौ । उपाध्यायमातुलाभ्यां वा ( मातुलोपाध्याययोरानुग्वा ) इति पक्षे ङीप् ॥३०॥ पत्युर्माता पत्न्याः श्वश्रूः , पत्न्या माता पत्युः श्वश्रूः, श्वशुरस्योकाराकारलोपश्च ( वा० ) इत्यूङ् । तयो पतिपत्न्यो पितान्योन्यं श्वशुर , शु पूजितं कृत्वाश्नुते । ( पितृव्यः ) पितृव्यमातुलमातामहपितामहा ( म० ) इति साधु । ( मातुल ) प्राग्वत् ॥ ३१ ॥ श्यायते श्याल , स्यम वितर्के स्माद्वा ( स्याल ), पत्युः श्याला इत्यर्थः । स्वामिनः पत्युः भ्राता कनिष्ठः पत्न्या , दीव्यति देवा, दिवेर्ऋ ( उ० ) । अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यर ( उ० ) देवर । स्वसुरपत्यं स्वस्रीय , स्वसुश्छ ( सू० ) । जाया मिमीते जामाता ॥ ३२ ॥ प्रगत पितामहात् ( प्रपितामह ) । मातुः पिता मातामह , [ तत्पिता प्रमातामह ] । समानः पिण्ड एषां, य स्मृतिः- सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । सप्तमादूर्ध्वं सगोत्रा । समानो नाभिर्मूलमेषां सनाभय , ज्योतिर्जनपदेति ( सू० ) समानस्य सत्वम् ॥ ३३ ॥ समाने उदरे शयितः समानोदर्य , समानोदरे-शयित ( सू० ) इति यत् । सोदराद्यः- सोदराद्य ( सू० ), विभाषोदरे इति ( सू० ) समानस्य स च वा । समाने गर्भे भवः सगर्भ्य , सगर्भसयूथसनुताद्यन् ( सू० ), छान्दसोपि लोकेभिधानात्, सह जायते सहजा भ्राता । समानं गोत्रमेषां सगोत्रा , ज्योतिर्जनपदेति ( सू० ) सत्वम् । ज्ञायते ज्ञाति । बध्नाति बन्धु । ( बान्धव ) स्वार्थेऽण् । एते स्वो ज्ञातिवचन , अन्य आत्मीयार्थ ॥ ३४ ॥ ज्ञाते-

ज्ञातेयं बन्धुता तेषां क्रमाद् भावसमूहयोः ।
धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥
अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।
भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥
मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
दंपती जंपती जायापती भार्यापती च तौ ।
गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् ॥ ३८ ॥
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ ।
तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम् ॥ ३९ ॥
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ।
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥

---

भावो ज्ञातेयम्, कपिज्ञात्योर्ढक् (सू०) । बन्धूनां समूहो बन्धुता, ग्रामजनबन्धु(सहाये)भ्यस्तल् (सू०), तनि स्त्रीत्वं स्वभावतः । धुनोति धवः । प्रीणाति प्रियः, इगुपधेति (सू०) कः । पाति पतिः, पातेर्डतिः (उ०) । बिभर्ति भर्ता वरयिता वरश्च । जारयति जारः, दारजारौ कर्तरि णिलुक् च (वा०) । उपजारः पतिरुपपतिः ॥ ३५ ॥ भर्तरि जीवति । कुण्ड्यते कुलमनेन कुण्डः, कुडि दाहे । जारज इत्येव । गुह्यते लज्जाकरत्वाद् गोप्यते गोलकः, परदार्यां प्रजायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलक इति स्मृतिः । भ्रातुरपत्यं भ्रात्रीयः, भ्रातुर्व्यच्च (सू०) इति वा छः । भ्रातृव्यो नानार्थे । भ्राता च भगिनी चेति (भ्रातरौ), भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (सू०) इत्येकशेषः । [एवं पुत्रौ] ॥ ३६ ॥ माता च पिता च मातापितरौ आनङ्ऋतो द्वन्द्वे (सू०) । (पितरौ) पिता मात्रा (सू०) इत्येकशेषो वा । मातरपितरावुदीचाम् (सू०) इति अन्यः साधुः । प्रसूर्माता जनयिता चेति द्वौ नियतौ । (श्वशुरौ) श्वशुरः श्वश्र्वा (सू०) इत्येकशेषो वा । [पुत्रश्च दुहिता च प्रागुक्तम्] ॥३७॥ राजदन्तादिः (सू०) जायाशब्दस्य दम्भावो जंभावो वा निपात्यते, दं भार्येति निघण्टुः । गर्भ आशेतेऽत्र गर्भाशयः । जरामेति जरायुः । उल्यते वृणोति उल्बम् । कलयति के लसति वा कललः शुक्रशोणितसमवायः, प्रसिद्धास्य पर्याया लोके, अशीत्यावयवानामर्थे तु विधिः । उल्बपर्याय कलल इत्येके, यन्मुनिः– तदुल्बं कललं च तत् ॥ ३८ ॥ दशमे मासि सूतव इति श्रुतेः, नवमे दशमे मासि प्रबलैः सूतिमारुतैः । निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वर इति स्मृतेश्च नवमो दशमो वा मासो, विजनने भवो वैजननः । गीर्यते गर्भः । भ्रियते भ्रूणः कुत्सितः । स्त्रीपुंसाभ्यामन्या तृतीया प्रकृतिः, लिङ्गान्तरत्वात् । शाम्यति शण्ढः, [षण्ढोऽपि] । क्लीबते क्लीबः । पण्डते पण्डः, [पिण्डोऽपि] । न स्त्री पुमान् नपुंसकम्, नभ्राण्नपादिति (सू०) साधु, स नपुंसको भेदिनि स्यात्पुंस्यपि ॥ ३९ ॥ शिशोर्भावः शैशवं, प्राणभृज्जातिवयो (सू०) । यूनो भावो यौवनं, हायनान्तयुवादिभ्योऽण् (सू०) । (वार्धकं) गोत्रे वृद्धस्य (सू०) वृद्धाच्चेति वक्तव्यम् (वा०) वुञ्, मनोज्ञादित्वात् (द्वन्द्वमनोज्ञादिभ्यश्च) स वर्धकं स्यात्, यथा– वार्धके मुनिवृत्तीनाम् (रघु०) ॥४०॥ पलति शौभ्येन पालितः, पल गतौ ।

पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ।
स्यादुत्तानशया डिम्भा स्तनपा च स्तनधयी ॥ ४१ ॥

बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा ।
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥

वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ।
जघन्यजे स्युः कनिष्ठयवीयो वरजानुजा. ॥ ४३ ॥

अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसल. ।
तुन्दिलस्तुन्दिभ(क)स्तुन्दी बृहत्कुक्षि. पिच(चि)ण्डिल ॥४४॥

अवटीटोवनाटश्चावभ्रटो नतनासिके ।
केशव केशिक. केशी वलिनो वलिभ समौ ॥ ४५ ॥

---

आदिशब्दाद्रोमादौ च । विस्रसतेनया कचाटन विस्रसा । जीर्यन्त्यनया जरा पिद भिदादिभ्योऽङ (सू०) । उत्ताना शेते-उत्तानशया, अधिकरणेशे (सू०) इत्यच्-उत्त नादिषुक्तषु (वा०) इत्यच । डिम्भेति प्राक् पश्चिक्रमेणोक्त इह मातृपक्रमात् । स्तन पिबति स्तनपा, (सुपस्थ इत्यत्र) सुपीति याग वभग क । स्तन धयति स्तनंधयी, नासिकास्तनयोर्ध्मा धेटो (सू०) इति खश्, धेटष्टित्वाद्ङीप् । स्त्रीलिङ्गेन निर्देश स्त्रीप्रत्ययप्रदर्शनार्थ ॥ ४१ ॥ वलति(ले) प्राणिति बाल, ज्वलादित्वाण्ण (सू०), वाड् आप्रावेस्माद्वा । अरत्ये कुत्सिते मूढे मने रौत्सर्गिक स्मृत । नकारस्य च मूर्धन्यस्तेन सिध्यति माणव ॥ स्वार्थे कन् (माणवक) । वयसि प्रत्यग्रे तिष्ठति वयस्थ । तरति तरुण । यौति मिश्रीभवति स्त्रिया युवा । प्रगत वयोऽस्य प्रवया । तिष्ठति स्थविर । वर्धते स्म वृद्ध, एतमादौ गड्डरिकाप्रवाहेण भूते क्त वर्तमाने युक्त शीलितादिवत् । जिनाति स्म जीन, ग्रहिज्यावयीति (सू०) सम्प्रसारण, सम्प्रसारणस्येति (सू०) दीर्घ, ल्वादिभ्य (सू) निष्ठा नत्वम् । जीर्यति स्म जीर्ण, श्युक – किति (सू०) इत्यनिट् । (जरन्) जीर्यतेरतृन् (सू०) ॥ ४२ ॥ अतिशयेन वृद्धो वर्षीयान्, ईयसुनि प्रियस्थिरेति (सू०) वर्षादेश । दशमोऽवस्थाविशेषोऽस्यास्ति दशमी, वयसिपूरणात् (सू ) इतीनि, यन्मुनि – इगे वयोदशापेन सप्तमी दशमाति च । अतिशयेन वृद्धो ज्यायान्, ज्यच (सू०), वृद्धस्य च (सू०) इति ज्यादेश, ज्यादादीयस (सू०) इत्यात्वम् । अग्रे जातोऽग्रिय, अग्राद्यत् (सू०), घच्छौ च (सू०) इति घ । अग्रयाग्रीयौ च । अग्रिमशब्दे, अग्रादिपश्च डिमच् (वा०) । जघन्यज पश्चाज्जात । अत्यर्थं युवा कनिष्ठो यवीयाश्च, युवाल्पयो कनन्यतरस्याम् (सू०), स्थूलदूरेति (सू०) यणादिलोप पूर्वस्य गुण । एव कनीयान् यविष्ठ्य । अवरे जायतेऽवरज ॥ ४३ ॥ छयति स्म छात, छो छेदन । मांसमस्यास्ति मांसल, सिध्मादित्वात् (सू०) लच् । असावस्य स्त (अंसल), वत्संसाभ्या कामबले (सू०) इति लच् । तुन्द विवृद्धमस्यास्ति, तुन्दादिभ्य इलच्च (सू०) इति च दिनिठनौ । उदरिलोपि । तुन्दमस्यास्ति तुन्दिभ, तुन्दिवलिवटेर्भ (सू०) ॥ ४४ ॥ नतनासिकाया संज्ञायामटीटच्नाटज्भ्रटच (सू०) । नतनासिकश्चिपिटघोण । नत या नासिका । नासानमनस्येत घर्नेन्ते । प्रशस्ता केशा सन्त्यस्य केशव . केशाद्वोऽन्यतरस्याम् (सू०) । वलिरस्त्यस्य वलिन । पामादित्वान्न (लोमादिपामादीति) । (वलिभ) तुन्दिवलिवटेर्भ (सू०) ॥ ४५ ॥ पूगनगगार्येणे पोगण्ड । सर्वेति सर्व ।

विकलाङ्गस्तु पोगण्डः खर्वो ह्रस्वश्च वामनः ।
खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ॥ ४६ ॥
खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः ।
ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ॥ ४७ ॥
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः ।
पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते ॥ ४८ ॥
वलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः ।
जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया ।
भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ।
पुमान्यक्ष्मा क्षयः शोषः प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

---

हसति हरः । वामोऽस्यातीति वामनः । निखर्वः खर्वरः [ नः ] मर्व इति नाममाला । खरा तीक्ष्णा खरस्येव वा नासास्य खरणाः, खुरखराभ्यां वा नस्वक्तव्यः ( वा० ), पक्षे— अनुनासिकाया संज्ञायां नसं च स्थूलात् ( सू० ), पूर्वपदात्संज्ञायामगः ( सू० ) इति णत्वम् । नःक्षुद्रः क्षुद्रनासिकः । ( विग्रः ) वेर्ग्रो वक्तव्यः (वा०) । ४६ ॥ खुराकारा नासिकास्य खुरणाः—विकटघोणः । प्रगते विरले वातादिदोषात्ययोर्गे संहते च जानुनी अस्य, प्रसंभ्यां जानुनोर्ज्ञुः ( सू० ), ऊर्ध्वाद्विभाषा ( सू० ) ॥ ४७ ॥ एडमूकवि —एडः । बद्धौ कर्णावस्य बधिरः । कुत्सितेन उब्जः कुब्जः, पृषोदरादिः ( सू० ) । गडुरस्यास्ति गडुलः, सिध्मादित्वात् ( सू० ) लच् । कुण शब्दे, कुणाणिः कुणिरिति नैरुक्ताः । कलंबकस्तवक्रकर्णः खलतिर्निन्द्यलम्बः । स्पृश्यते पृच्छति वा पृश्निः । ( श्रोणः ) श्रोणृ संघाते, कुटिलजङ्घापादः । मुण्ड्यते मुण्डः ॥ ४८ ॥ वलने चेष्टने यस्मिरं नेत्रं तद्योगाद्वलिरः । के मूर्ध्नि करोत्यक्षिणी चलताक्ष्वा केकरः, एनमुपाध्यायः काच[र]र इत्यवदन् । ( खोडः ) खुड प्रतिघाते । ( खञ्जः ) खजि वैकल्ये । खञ्जो दुश्चर्मा द्विनग्नोऽपि । जराशब्दादुत्तरा उत्तानशयादयः खञ्जान्तास्त्रिलिङ्गाः । जडति जडुलः, जडुलो जडत्वाद्वा । काल एव कालकः । अपिप्लवते पिप्लुः । तिलप्रतिकृतिस्तिलकः । तिल इव कालकस्तिलकालकः, देहे कृष्णं लक्ष्म ॥ ४९ ॥ आमयस्याभावोऽनामयं, अव्ययविभक्तिसमीपेति ( सू० ) अर्थाभावेऽव्ययीभावः । कित्निवासप्रतीकारे सन् । भिषज्यत्यनेन भेषजं, भिषज कण्ड्वादिः, अनन्तावसथेतिहभेषजा-दिदि ( सू० ) निर्देशाद् गुणः, भेषं रोगं जयतीति दुर्गः । ( औषधं ) ओषधेरजातिविति ( सू० ) स्वार्थेऽण् । ( भैषज्यं ) अनन्तावसथेतिहभेषजाञ्ञ्यः ( सू० ) स्वार्थे । अविद्यमानो गदोऽस्मिन्नगदः । जयति रोगान् जायुः, कृवापाजिमिस्वदिसाध्यशूभ्य उण् ( उ० ) ॥ ५० ॥ रुज्यतेऽनया रुक्, क्विप् । ( रुजा ) भिदादिः ( भिदादिः ) । व्याधीयतेऽनेन व्याधिः । गदति व्यथां गदः । आमोऽस्त्यस्मिन्नामयः, अम रोगे अस्माद्वा । आमोऽपि । यक्ष्यते पूज्यते रोगराजत्वाद्यक्ष्मा । राजयक्ष्मापि । क्षयत्यनेन क्षयः । शुष्यत्यनेन शोषः । प्रतिश्यायते प्रतिश्यायः, श्याद्व्यधेति ( सू० ) णः । पीनं स्थूलत्वं नयति पीनसः ॥ ५१ ॥ क्षरण क्षुत्, क्विप्, क्षुत्, अत् । क्षवतेनेन क्षवः । क्षौत्यनेन क्षवथुः । क्षवति विक्षपति

स्त्री क्षुत्क्षुतं क्षवः पुंसि कास( स )स्तु क्षवथुः पुमान् ।
शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ॥ ५२ ॥
किलाससिध्मे कच्छ्वां तु पामा पामा विचर्चिका ।
कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकस्त्रिषु ॥ ५३ ॥
व्रणो स्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् ।
कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५४ ॥
आनाहस्तु विबन्धः स्याद् ग्रहणी रुक्प्रवाहिका ।
प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥
व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः ।
अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ॥ ५६ ॥
रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।
वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥

---

शोफः शोथश्च । श्वयतेनेन श्वयथुः । विपद्यतेनया विपादिका, पादस्फोटस्य ( सू० ) इत्यत्रान्यत्रापीति वक्तव्याद् वुन्– लोपो वा ॥ ५२ ॥ समे इति शेषः । किल्मस्यति किलासम् । सिध्यति सिध्म मलभिन्नाख्यम् । कषति कच्छूः । पिबत्यसृग् पामा । ( पामा ) डाबुभाभ्यामन्यतरस्याम् ( सू० ) । विचर्चयति विचर्चिका, अङ्गुल्यादिसन्धिषु सूक्ष्माः पिटका, खर्जूविशेष इत्येके । कण्डूयनं कण्डूः, भावे क्विप् ( सम्पदादिभ्यः क्विप् ) । ( कण्डूया ) अप्रत्ययात् ( सू० ) । खर्जनं खर्जूः, खर्ज खर्जे व्यथने । विस्फोटयति विस्फोटः । पटति सङ्क्लिष्यति पेटति वा पिटका ॥ ५३ ॥ व्रणयति व्रणः । ईर्यत्यङ्गमीर्मम् । इयर्त्तिरुः, उस् । नाड्या व्रणः, समासे पुंस्त्वम् । नाडिश्च । कूयते शब्द्यते कोठः । ( मण्डलक ) मण्डलाकृति कुष्ठम् । समे इति शेषः । कुष्णात्यङ्गं कुष्ठ, कुष्मिन् निष्ठति वा, अम्बाम्बगोभूमिसव्यापद्वित्रि ( सू० ) षत्वम् । श्वेतते श्वित्रं श्वेतकुष्ठम् । पापरोगत्वाद् दुर्नामकम् । इयर्त्यर्शः । गुदरोगः गुदकीलश्च ॥ ५४ ॥ आनहनं विण्मूत्रनिरोधः । गृह्णाति ग्रहणी, जाठराग्निर्गृह्यतेनया वा तच्छेदोऽधन्यत्र । रुग्रोगः । मलप्रवहणं प्रवाहिका, रोगाख्यायाण्वुल् ( सू० ) । प्रच्छर्दनं प्रच्छर्दिका, रोगाख्यायाण्वुल् ( सू० ) । वमनं वमिः । छर्दिश्छर्दी च ॥ ५५ ॥ विदार्यतेनया विद्रधिः, विद्रो धीयतेस्यां वा । मेहति मूत्रयतेनेन मेहः । प्रमेहोऽपि, दीपदीपवत् । भं दारयति भगन्दरः छिद्रसन्धौ पिटकः, पूःसर्वयोर्दारिसहोः ( सू० ) इत्यत्र भगेच दारेर्वक्तव्यात् ( वा० ) खच् । श्लीपदं पादवल्मीकं पेशष्नं विन्दलुमरन्म् । व्याधिभेद इत्येव । अश्मानं शुक्रं रात्यश्मरी । शुक्रात्पूर्वे मूर्च्छितान्ता वाच्यलिङ्गाः ॥ ५६ ॥ अगदः क्रियतेनेनागदंकारः, कारेसत्यागदस्य ( सू० ) इति मुम् । भिषज्यति भिषक् । विद्यामधीते वेद वा वैद्यः । आद्यौ सामान्येनौषधादावपीत्येके । वमति वन्तः, वार्त्त इति तु युक्तः, यद्वक्ष्यति– वार्त्तं फल्गुन्यरोगे च त्रिषु, वृत्तिरस्यास्ति, प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ( सू० ) । कलयति साधु कल्यः । उल्लाघ्यते स्मोल्लाघः, क्तः अनुपसर्गात्फुल्लेति ( सू० ) साधुः ॥ ५७ ॥ ग्लायति स्म ग्लानः, संयोगादेरातो धातोर्यण्वतः ( सू० ) इति निष्ठानत्वम् ।

पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।
उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥
रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ।
बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ॥ ६४ ॥
पश्चाद्ग्रीवासिरा मन्या नाडी तु धमनिः सिरा ।
तिलकं क्लोम मस्तिष्कं गार्दं किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥
अन्त्रं पुरीतद् गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ।
स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे ॥ ६६ ॥
सृणिका स्यन्दिनी लाला दूषिका नेत्रयोर्मलम् ।
मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
पुरीषं गूथं वर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ ।
स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ ६८ ॥

---

कार्यं वा । मन्यते मांसं, मांसभक्षयितामुत्रेति **नैरुक्ताः** [ मांसभक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वे निरुक्तं मुनिरब्रवीदिति नैरुक्ता ]। पाल्यतेऽनेन देहः पललं, यदुक्तमव्ययत.- पललं तिलमिश्रे स्यात्पलले पिशितेऽपि च । क्रूयते ( क्रूयते ) क्रव्य, क्रुड् गतौ । आमिष्यते आमिषम् । जङ्गल च, पल नानार्थे । उत्ताप्यते शोष्यते- उत्तप्तम् । वल लुनाति वल्लूरं, वल्लि सौत्रो वा ॥ ६३ ॥ रुणद्धि स्रोतांसि रुधिरम् । अस्यते न सृज्यते वासृक् । लोहितं रक्तं च वर्णतः । अस्यतेऽस्रम् । शोणति शोणितं, शोण वर्णे । बुक्कयते स्वादु च न्मृग्यते बुक्का, नान्न पुस्यय, स्त्रीत्येके, शंकेति **वैद्याः** । अग्रं मुख्यम् । ह्रियते हृत्- जीवाधार पद्मं, दान्तं प्रकृत्यन्तरम् । मेद्यति स्निह्यति मेदः, असन्तत्वात्क्लीबे । उप्यते वपा । वस्ते मांसं वसा, शुद्धमांसस्य यः स्नेहः सा वसेति **वैद्याः** ॥ ६४ ॥ पश्चाद्भागे ग्रीवाया कृकाटिकाया सिरा, मन्यते मन्या सञ्ज्ञायांसमजनिषदेति ( सू० ) क्यप् । नडस्येयं नाडी सौपीर्यात् । धमति धमनि, धमि सौत्र । सिनोति काय सिरा, षिञ् बन्धने । तिलति तिलकम् । क्लाम्यति क्लोम, उदर्यो जलाधार । हृदयस्य दक्षिणे यकृत्क्लोम वामे प्लीहा पुप्फुसश्चेति **वैद्याः** । मस्तकमज्जा, मस्तकमिष्यतीति मस्तिष्कं, इष गतौ । गुर्यते गार्दं, गुर्द परिवेष्टने । केटति किट्टम्, किट गतौ । मलते धारयति कायं मल ॥६५॥ अमत्यनेनाऽमन्त्रम् । पूर्यते पुरीतत् , तान्तोयम् । गुड्यते रक्ष्यते मा बाधिष्टेति गुल्म । प्लेहते प्लीहा, नान्त । वस्ते छादयति कायं वस्नसा । स्नसा स्न[न]ायुश्च । स्नायत्यङ्ग स्नायु , ष्णै वेष्टने । महास्नायुश्च कण्डरा, स्नायुसङ्घात इति **वैद्याः** । दक्षिणपार्श्वे कृष्णमांसाशः कालखण्डम्, कालखञ्जमित्येके । यम करोति यकृत् ॥ ६६ ॥ सरति सृणिका । स्यन्दते स्यन्दिनी । ललति लाति वा लाला । दूषयत्यक्षि दूषिका, दूषीकापि । ( प्रस्राव ) प्रेद्रुस्तुस्रुवइति ( सू० ) घञ् । उच्चार्यते प्रेर्यते- उच्चार । अवाच्य कीर्यत इति, वर्चस्केवस्कर इति ( सू० ) साधु । शाम्यति शमलम् । शक्नोत्यनेन शकृत् ॥ ६७ ॥ पिपर्त्यन्त्र पुरीषम् । गूयत उत्सृज्यते गूथम् । वर्च एव वर्चस्कम् । विशिष्टेनेनया विष्ठा । वेवेष्टि विट्, विशतीति सभ्याः । कल्पते कर्परः, कृपे रो लो नास्ति बाहुलकात् । कं पालयति कपालं मूर्धास्थि, घटादिखण्डोऽप्युपचारात् । कीनि कसति कीकसम् । कुले शरीरे साधु कुल्य, कोलति संस्त्यायते वा । अस्यतेऽस्थि ॥ ६८ ॥ कं कालयति कङ्कालोऽस्ति वा कङ्कालः, देहस्थभरेऽस्थिपञ्जर । कारङ्कंऽपि । कशादयेति

स्याच्छरीरास्थि कङ्कालः पृष्ठास्थ्नि तु कशेरुका ।
शिरोऽस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥
अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
पादाग्रं प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥
तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः ।
जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥
सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वङ्क्षणः ।
गुदं त्वपानं पायुर्ना बस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।
पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ७४ ॥
कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।
स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥

---

मुनिः, कश्यप इति । पृष्ठग्रन्थ्यां गडुः पुमान् । के रयति करोटिः करोटी च । पृणाति पर्शुः, पर्शुरेव पर्शुका ॥ ६९ ॥ अङ्गत्यङ्गम् । प्रत्येति प्रतीकः । अवयौत्यवयवः । अपहन्यतेऽपघनः, अपघनोऽङ्गमिति (मु०) मधुः । कल्यते कलेवरम् । गाते गच्छति गात्रम् । उप्यते वपुः । संहन्यते संघात्यन्तेऽस्थि-मज्जादीनि संहननम् । शीर्यते शरीरम् । वृष्यते सिच्यते वर्षते मलान्वा वर्ष्म । विगृह्यते विग्रहः, प्रहवद्-इति (मु०) अप् ॥ ७० ॥ चीयते कायः, निवासचितिशरीरोपसमाधानेष्व देश्चकः (मु०) । दिह्यते देहः । मूर्च्छति वर्धते मूर्तिः । तन्यते तनुः । पादस्य पदस्य प्रपदं, पदशब्दः पादपर्यायोऽस्ति । पद्यतेऽनेन पादः । पदिति हलन्तलक्षणपर्यायोऽस्ति, यत्तु गौः पदा न स्प्रष्टव्या, पद्भ्यामेव यथाप्रेत्यादौ स पद्भ्यो-मासेति (मु०) पदादेशः, अतः पदोऽग्रस्थानि पाठ्यम्, क्लीबे तु पदम् । अङ्घ्यतेऽनेनाङ्घ्रिः । चरत्यनेन चरणः ॥ ७१ ॥ पादग्रन्थ्यां पार्श्वे इति सूते, घोटते घुण्टिका, घुट परिवर्तने । गुल्यते गुल्फः । गुल्फाधः पश्चाद्भागः पार्ष्णिः, पुमानिति प्रायिक, पृष्यते श्लिष्यते वितादिका चिकित्सार्थं पार्ष्णिः । जङ्घन्यते कुटिलं गच्छति जङ्घा । प्रसरति प्रसृता । जायते जानु । ऊर्वोः पर्व ग्रन्थिः । आस्थि तिष्ठत्यस्मिन्नष्ठीवत्, आसन्दीवदष्ठीवदिति (मु०) साधु ॥ ७२ ॥ सजति सक्थि । ऊर्णूयते ऊरुः । तत्सन्धिः ऊरुसन्धिः, वङ्क्षते वङ्क्षणः । गवते गूयते वानेन गुदम्, गुद परिवेष्टने वा । अपानित्यनेनापानम् । पाति मलोत्सर्गात्पायुः, पिबति वा पेदम् । वसत्यस्मिन्मूत्र बस्तिर्मूत्रपुटकम् ॥ ७३ ॥ कट्यते आश्रियते कटः, शवे श्रोणौ कालेऽपि च गजगण्डे भूषे कटः इति शाश्वतः । कटीरोऽपि । श्रोण्यते सहन्यते श्रोणिः, तस्याः फलकमिव-फलकाकारं श्रोणिफलकम्, ककुदमस्त्यस्याः ककुद्मती । कट्याः पश्चाद्भागः, नितम्बति सुरतसंमर्दोऽस्मिन्नितम्बः । स्त्रीकट्याः पुरो भागः, हन्यते जघनम् ॥ ७४ ॥ कुत्सितं कुन्दति कुकुन्दरे, द्वयहीने क्लीबे । स्फायते स्फिक् । प्रोथतेऽभिलषित प्रोथः । प्रोथौ । (उपस्थ) वक्ष्यमाणौ भगलिङ्गौ ॥ ७५ ॥ भजते भग,

भगं योनिर्द्वयोः शिश्नो मेढ्रं मेहनशेफसी ।
मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
पिच(चि)ण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ ।
चु(चू)चुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ७७ ॥
उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ।
स्कन्धो भुजाशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी ॥ ७८ ॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ।
मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥
भुजबाहू प्रवेष्टो दोः स्यात्कफो(पो)णिस्तु कूर्परः ।
अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥
मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥
अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी ।
मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥

---

(खनोघचेत्यत्र) खलो भग पदमितिवक्तव्यादघ (शा०)। यौति योनि। स्माचिह्न स्मरगृह च। शिनोति घपति भग शिश्न, शेफ[स] श्च। मेहत्यनेन मेढ्रम्। मुष्णाति गापायात शुक्र मुष्क। अण्डयो काशोऽण्डकोश। वर्षति शुक्र वृषण। पल्श्च। पृष्ठस्य नोध ऊर्ध्वे सर्वो त्रिमघट्टात्त्रकम् ॥ ७६ ॥ पचत्यन्नं पिचण्ड, अपिचमत्याहार व। कुष्यत कुक्षि। जमत्याहार जठरम्। उदीयति(दियर्ति) उदरम्। तुदात तुन्द, तुन्दिश्च। स्तन्यत बाल स्तनौ। कूयेते कुच्येते वा कुचौ। वक्षोरहौ उरामनौ च। चुाचल्लध्यक्त कायति पायमान चुचुकम्। (क्रोडं) क्रुड घनत्व, ना पुल्लिङ्ग न भवाने। वक्षे मध्याद्भिन्नास्थि क्रोडा ॥ ७७ ॥ उरस्यति सहते- उर उरम् कण्ड्वादि। वस्यते छाद्यते वत्सम्। (वक्ष) वक्ष सघाते, असुन्। पञ्च (क टाद ) एकार्था इत्येके। पृष्यते सिच्यते पृष्ठ देहस्य पश्चाद्भाग, पश्चान्मात्रे तूपचरात्। स्कन्द्यते भारेण स्कन्ध। अस्यते भारेणास। असस्क्षया सन्धिद्वद्भिन्नास्थि, जायते जत्रु ॥ ७८ ॥ कष्येते कक्षौ, यन्नावपि कक्ष्यौ। (पार्श्वं) पर्शूणां समूहः पार्श्वं (वा०), पार्श्वे इति द्विवचन न्याय्यम्। मध्ये भव मध्यम, मध्यान्म (सू०)। अवलगत्यवलग्नमतिकृशत्वात् विलग्न च। मन्यते मध्यम्। परौ भुजो बाहुश्च ॥ ७९ ॥ भुज्यतेऽनया भुजा, भुजन्युब्जाविति (सू०) साधु। वहति वाहते प्रयतते वा बाहु, बाह्ह प्रयत्ने। प्रवेष्टते प्रवेष्ट। द्यति ददाति वा दो, सान्त क फणति कफोणि। कुरति कूर्पर, बाहूपबाहुसन्धेररत्निसञ्ज्ञस्य पश्चाद्भाग तथा च- कफोणि. कूर्परोऽरत्ने पृष्ठमिति **नाममाला**। अस्य कूर्परस्याध्व, प्रगण्यत प्रगण्डयते वा प्रगण्डो बाहु। कूर्परस्याधः प्रकुष्यते प्रकोष्ठ उपबाहु, यत्कात्य - प्रकोष्ठमन्तर विद्यादरत्निमणिबन्धयो ॥ ८० ॥ मणेर्बन्धोऽत्र मणिबन्धो भुजपाण्यो सधि। तस्मादारभ्याकनिष्ठाया करभ, करे भवतीति आङभिविधौ (सू०) शेते स्मिन्सर्वं शय, शम इत्येके, **नाममाला** तूभय पपाठ- पाणि शम शयो हस्त इति। पण्यतेऽनेन पाणि। हस्तकरौ नानार्थे। मणिबन्ध पाणिमूल। तर्जयत्यनया तर्जनी। प्रदिशत्यवश्य प्रदेशिनी ॥ ८१ ॥ अङ्गु पाणिपाद लत्यङ्गुली। अङ्गौ तिष्ठत्यङ्गुष्ठ, सुपिस्थइति (सू०) क, अम्बाम्ब गोभूमीति (सू०) षत्वम्। अनामिका नामग्रहणयोग्या, ब्रह्मणोऽनया शिरश्छेदनादत एवास्या पवित्रं क्रियते। कनिष्ठात्यल्पा। ता अङ्गुल्याः पञ्चाङ्गुल्य ॥ ८२ ॥ नाम्नि रक्षस्य नख, नभ्राण्नपादिति

पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।
प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।
पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ ।
पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ।
स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥
व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥
कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि ।
कम्बुग्रीवा त्रिरेखा सावटुर्घाटा कृकाटिका ॥ ८८ ॥
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।
क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥

---

( मू० ) साधुः, न खनति याति वा । नखं राति नखरः, न खन्यते वा, डहरेकवका ( खनेर्डडरेकेकवकाच्याः ) । पुनर्नवः कररुह इत्येके पेठुः । निभुननचरणन्वाभावः । कामाङ्कुशोऽपि । तर्जन्या युते तते प्रसारितेऽङ्गुष्ठे मध्यं, प्रादिश्यते प्रदेशः । मध्यमया युतेऽङ्गुष्ठे तते तालः, तल प्रतिष्ठायाम् । अनामिकया युते ततेऽङ्गुष्ठे, गोकर्णाकृतिर्गोकर्णः ॥ ८३ ॥ सह कनिष्ठया ततेऽङ्गुष्ठे वितस्तिः, वितस्यतीति । दिष्टिश्च । द्वादशाङ्गुल इति सिद्धस्यानुवादः । चपतेनेन चपेटः, चपेटापि । प्रसृतं तलमस्य प्रतलः । प्रसृतो हस्तोऽस्य प्रहस्तः ॥ ८४ ॥ द्वौ प्रसृततलौ संहतौ सिंहतलाख्यौ, सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति, संहतलो वा– इत्येके संहतं संघट्टं लातीति । संकुचितो हस्तस्तालादिना, प्रसियत इति प्रसृतः, प्रसृतिश्च । निकुब्ज इत्यपपाठः । प्रकुब्जस्त्वर्धप्रसृतिः । तौ युतौ मयतौ पार्श्वश्लिष्टौ लौकिकोऽञ्जलिः, अञ्ज्यते ( अज्यते )ऽनेनेति, अम्यते जलमनेनेति नैरुक्ताः । नाट्ये तु– पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ॥ ८५ ॥ प्रकोष्ठे ( प्रकोष्ठे ) प्रसारितपाणौ हस्तश्चतुर्विंशत्यङ्गुल मानम् । स हस्तः, रत्नेः पुंस्त्वादौ वा । रमन्तेऽस्मिन्मला रत्निः, सह रत्न्या मुष्ट्या वर्तेत इत्येके । नास्ति रत्निर्मुष्टिरस्यारत्निः, निष्क्रान्ता कनिष्ठास्मिन्निष्कनिष्ठो मुष्टिस्तेनोपलक्षितः स हस्तोऽरत्न्याख्यः ॥ ८६ ॥ व्यामयति रज्ज्वायनेन व्यमानि वा व्यामः, स्वे स्वे पार्श्वे प्रसारितयोर्बाह्वोर्मध्यम् । ऊर्ध्वं विस्तृतौ दोः पाणिश्च यः पुंसो यत्र तन्मानमध्ये पौरुषं नाम मानम्, पुरुषोर्ध्वमानं तत्पौरुषमित्येके, पुरुषहस्तिभ्यामण्च ( सू० ) । द्वादशाङ्गुल तु पौरुषं छायामानम् ॥ ८७ ॥ कणति कण्ठ्यते वा कण्ठः । गिलति गलो ग्रीवाग्रभागः । गृणाति गिरति वा ग्रीवा । शिरो धीयतेऽस्यां शिरोधिः । कं धारयति कन्धरा, संज्ञायाम्भृतृवृजि ( सू० ) खच् । शङ्खाकृतिर्ग्रीवा कम्बुग्रीवाख्या, असौ त्रिवल्या चेति । न वटत्यवति वावटुः । घटयति घाटा । कृक शिरोऽग्रेऽटति कृकाटिका ग्रीवायाश्च भागः ॥ ८८ ॥ उच्यतेऽनेन वक्त्रम् । अस्यतेऽस्मिन्नस्यम्, ऋहलोर्ण्यत् (सू०) इति ण्यत्, मुखं मुखान्तरालं च द्वयमास्यमिति शाश्वतः । वदत्यनेन वदनम् । तुण्ड्यतेऽनेन तुण्डं, तुडि तोडने । अनिति श्वसित्यनेनाननम् । लप्यतेऽनेन लपनम् । खन्यतेऽनेन मुखं, डिच्खनेर्मुट्चोदात्तः ( उ० ), मुखानि खान्यत्रेत्येके । जिघ्रत्यनेन घ्राणम् । घोणति भ्रमति गन्धः घोणा । नासते नासिका, कुल्या गन्धवहा घोणा घ्राणं नासा च नासिकेति मुनिः कुल्यामप्याह । घ्रिङ्घा[ घि ]णी च ॥ ८९ ॥ उच्यते तौष्ठादारभ्याष्ठ इत्युभयाधौरि– अधरस्तथाप्यादुत्तरौ-

भगं योनिर्द्वयोः शिश्नो मेढ्रं मेहनशेफसी ।
मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
पिच(चि)ण्डकुक्षी जठरोदरतुन्दं स्तनौ कुचौ ।
चु(चू)चुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ७७ ॥
उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ।
स्कन्धो भुजशिरोंऽसोऽस्त्री संधी तस्यैव जत्रुणी ॥ ७८ ॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ।
मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥
भुजबाहू प्रवेष्टो दोः स्यात्कफो(फो)णिस्तु कूर्परः ।
अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥
मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥
अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी ।
मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥

---

(खनेर्घश्चेत्यत्र) खलो भग इति पदमितिवक्तव्याद्घ (वा०) । यौति योनिः । स्त्रीचिह्नं स्मरगृहं च । शिनोति घर्षति भगं शिश्नः, शेफ[स] श्च । मेहत्यनेन मेढ्रम् । मुष्णाति गोपायति शुक्रं मुष्कः । अण्डयोः कोशोऽण्डकोशः । वर्षति शुक्रं वृषणः । पेलश्च । पृष्ठवंशस्याध ऊर्ध्वः सन्धौ त्रिकम् ॥ ७६ ॥ पचत्यन्नं पिचण्डः, अपिचमत्याहारं वा । कुष्यते कुक्षिः । जमत्याहारं जठरम् । उदीर्यति(दियर्ति) उदरम् । तुदति तुन्दं, तुन्दिश्च । स्तन्यते ध्वनति स्तनौ । कूर्यते कुच्यते वा कुचौ । वक्षोरुहौ उरोजौ च । चुचिवलक्ष्यकं कायति पायमानं चुचुकम् । (क्रोडं) क्रुड घनत्वे, ना पुंलिङ्गं न भवति । वक्षोमध्यास्थि क्रोडा ॥ ७७ ॥ उरस्यति सहते— उरः, उरम् कण्ठवादि । वस्यते छाद्यते वत्सम् । (वक्ष) वक्ष संघाते, असुन् । पञ्च (क्रोडादयः) एकार्था इत्येके । पृष्यते सिच्यते पृष्ठं देहस्य पश्चाद्भागः, पश्चान्मात्रे तूपचारात् । स्कन्द्यते भारेण स्कन्धः । अस्यते भारेणांसः । असस्कन्धयोः सन्धिद्वयास्थि, जायते जत्रु ॥ ७८ ॥ कष्यते कक्षौ, यन्नाभावपि कक्ष्यौ । (पार्श्वे) पर्शूनां समवस्तानः (वा०), पार्श्वे इति द्विवचनं न्याय्यम् । मध्ये भवं मध्यमं, मध्यान्म (सू०) । अवलग्नत्यालग्नमतिकृशत्वात् । विलग्नं च । मन्यते मध्यम् । परौ भुजो बाहुश्च ॥ ७९ ॥ भुज्यतेऽनया भुजा, भुजन्युब्जाविति (सू०) साधुः । वहति बाहते प्रयतते वा बहु, बाहृ प्रयत्ने । प्रवेष्टते प्रवेष्टः । द्यति ददाति वा दोः, सान्तः । कं फणति कफोणिः । कुरति कूर्परः, बाहूपबाहुसन्धेररत्निस्तस्य पश्चाद्भागः, तथा च— कफोणिः कूर्परोऽरत्नेः पृष्ठमिति **नाममाला** । अस्य कूर्परस्योर्ध्वे, प्रगण्यते प्रगण्डयते वा प्रगण्डो बाहुः । कूर्परस्याधः, प्रकुष्यते प्रकोष्ठ उपबाहु, यत्कात्य— प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयो ॥ ८० ॥ मणेर्बन्धोऽत्र मणिबन्धो भुजपाण्योः सन्धिः । तस्मादारभ्याकनिष्ठाया करभः, करे भवतीति आङभिविधौ (सू०) । शेतेऽस्मिन्सर्वं शयः, शम इत्येके, **नाममाला** तूभयं पपाठ— पाणिः शमः शयो हस्त इति । पणन्तेऽनेन पाणिः । हस्तकरौ नानार्थे । मणिबन्धः पाणिमूले । तर्जयत्यनया तर्जनी । प्रदिशत्यवश्यं प्रदेशिनी ॥ ८१ ॥ अङ्गुं पाणिपादं लक्षयङ्गुली । अङ्गौ तिष्ठत्यङ्गुष्ठः, सुषिरस्थ इति (सू०) कः, अम्बाम्बगोभूमीति (सू०) षत्वम् । अनामिका नामग्रहणायोग्या, ब्रह्मणोऽनया शिरश्छेदनादत एवास्या पवित्रं क्रियते । कनिष्ठान्त्या । ता अङ्गुष्ठाद्याः पञ्चाङ्गुल्यः ॥ ८२ ॥ नाहिन गमस्य नख, नत्रायतपादिनि

पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।
प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।
पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ ।
पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ।
स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥
व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥
कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि ।
कम्बुग्रीवा त्रिरेखा सावटुर्घाटा कृकाटिका ॥ ८८ ॥
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।
क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥

---

(सू० ) साधुः, न खनति याति वा । नखं राति नखरः, न खन्यते वा, द्वरेकवक्रा ( खनेर्डेररेकेकव-कादाच्चः ) । पुनर्भवः कररुह इत्येके पेठु । त्रिभुवनचरणन्त्राभावः । कामाङ्कुशोऽपि । तर्जन्या युते तते प्रसारितेऽङ्गुष्ठे मर्यां, प्रादिशते प्रदेशः । मध्यमया युतेऽङ्गुष्ठे तते तालः, तल प्रतिष्ठायाम् । अना-मिकया युते ततेऽङ्गुष्ठे, गोकर्णाकृतिर्गोकर्णः ॥ ८३ ॥ सह कनिष्ठया ततेऽङ्गुष्ठे वितस्तिः, वितस्यतीति । दिष्टिश्च । द्वादशाङ्गुल इति सिद्धस्यानुवादः । चपयत्यनेन चपेटः, चपेटापि । प्रसृत तलमस्य प्रतलः । प्रसृतो हस्तोऽस्य प्रहस्तः ॥ ८४ ॥ द्वौ प्रसृततलौ संहतौ सिंहतलाख्यौ, सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति, संहतलो वा- इत्येके संहतं संघटं लातीति । संकुचितो हस्तस्तालादिना, प्रसियत इति प्रसृतः. प्रसृतिश्च । निकुब्ज इत्यपरः । प्रकुब्जस्तत्पर्यायप्रसृतिः । तौ युतौ प्रसृतौ पार्श्वस्थौ लौकिकोऽ-ञ्जलिः, अङ्क्ते( अज्यते )नेनेति, अस्यते जलमनेनेति नैरुक्ताः । नाट्ये तु- पताकाभ्यां तु हस्ता-भ्यां संश्लेषादञ्जलिः स्मृतः ॥ ८५ ॥ बद्धो( प्रकोष्ठे ) प्रसारितपाणौ हस्तश्चतुर्विंशत्यङ्गुलमानम् । स हस्तः, हसेः पुंस्त्वार्थो वा । रमन्तेऽस्मिन्मला रत्निः, रह त्यागे रत्निः मुष्ट्या बद्धेन इत्येके । नास्ति रत्निर्मुष्टिरस्यारत्निः, निष्क्रान्ता कनिष्ठास्मिन्निष्कनिष्ठो मुष्टिस्तेनोपलक्षितः स हस्तोऽरत्न्याख्यः ॥ ८६ ॥ व्यामयति रज्ज्वादिनेन व्यमति वा व्यामः, स्वे स्वे पार्श्वे प्रसारितयोर्बाह्वोर्मध्यम् । ऊर्ध्वं विस्तृतौ दोः पाणी च यस्य पुंसो यत्र तन्मानमध्ये पौरुषं नाम मानम्, पुरुषोर्ध्वमानं तत्पौरुषमित्येके, पुरुषहस्तिभ्यामण्च ( सू० ) । द्वादशाङ्गुलं तु पौरुषं छायामानम् ॥ ८७ ॥ कणति कण्ठ्यते वा कण्ठः । गिरति गलो ग्रीवाग्रभागः । गृणाति गिरति वा ग्रीवा । शिरो धीयतेऽस्यां शिरोधिः । कं धारयति कन्धरा, संज्ञाया-मृतृवृजि ( सू० ) मच् । शङ्खाकृतिर्ग्रीवा कम्बुग्रीवाऽस्याः, असौ त्रिरेखा चेति । न वटलयति अवटुः । घटयति घाटा । कृक शिरोऽन्तं कटति कृकाटिका ग्रीवापश्चाद्भागः ॥ ८८ ॥ उच्यतेऽनेन वक्त्रम् । अस्यते-ऽस्मिन्नास्यम्, इ वन्धुक्षवृत्र (सू०) इति ण्यत्, मुखं मुखान्तरालं च द्वयमास्यमिति शाश्वतः । वद-त्यनेन वदनम् । तुण्डत्यनेन तुण्डं, तुडि तोडने । अनित्यनेन श्वासिक्रियेनाननम् । लप्यतेऽनेन लपनम् । खन्य-तेऽनेन मुखं, डित्खनेर्मुट्स्युचोदात्त. ( उ० ), मुखानि सन्त्यस्मिन्नित्येके । जिघ्रत्यनेन घ्राणम् । घोणति भ्रमति गन्धं घोणा । नासते नासिका, कुत्स्या गन्धवहा घोणा घ्राणं नासा च नासिकेति मुनिः कुत्स्या-मस्य । सिद्धपि[ घि ]णी च ॥ ८९ ॥ उच्यते तैरुपदारोगोष्ठ इत्युभयार्थोऽपि– अधरनासिकयोरुत्तरौ-

ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः ॥ ९० ॥
रदना दशना दन्ता रदास्तालु तु काकुदम् ।
रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी ॥ ९१ ॥
ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियाम् ।
कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ॥ ९२ ॥
लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥
अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने ।
कर्णशब्दग्रहौ पुंसि श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥
उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।
चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥
तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः ।
ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥ ९६ ॥

---

छेत्र-वर्तते । अधो भवोऽधर । ओष्ठाभ्यां सहितावधरौ वा, अधरोऽयमोष्ठमात्रे वर्तते । ओष्ठाध , चीयते चिबुक हन्वग्रसंधि । गण्डति संहन्यते गण्ड । कम्पते कपोल । तदधो गल्ल । तत्परस्तत्पश्च द्भागे कपोलाध , हन्त्याहार हनु , पुंस्यपि ॥९०॥ रद्यते विलिख्यतेऽभीभी रदना । दश्यते दम्यते चामीभिर्दशना दन्ताश्च । रदन्ति लिखन्ति रदा । तलत्याहारोऽस्मिस्तालु । ईषत्क्वते काकु ददाति वा काकुदम् । रस्य- तेऽनया रसना । लेढि जिह्वा । लोला च । घण्टिकान्तर्गलशुण्डिका । ओष्ठस्येति जातावेकवचनम् । सृजति लालां सृक्कि, सृक्कणी इत्यपि कश्चित्तन्नन्तत्वात् ॥ ९१ ॥ लल्यतेऽलंकार , ललश्चटुलस्तिलकोऽस्यत्र वा ललाटम् । अल्यते भूष्यतेऽलिक, अलीक च । गुध्यते पटादिना वेष्ट्यते गोधि । भाले च । भ्रमति भ्रू , नेत्रोर्ध्वे रोमराजि । कूर्ममिति भागुरिः, तन्न, लक्ष्यादर्शनात्, एव कूर्चम् । तारयति तमसस्तारका, तारकाज्योतिषीतीत्वाभाव ( वा० ) । अक्ष्ण इति खेचर्यव्यवच्छेदः । ( कनीनिका ) कनी दीप्तौ ॥९२॥ लोच्यतेऽनेन लोचन विलोचन च । नीयतेऽनेन दृश्य नयन नेत्र च । ईक्ष्यतेऽनेनेक्षणम् । चष्टे वक्ति चक्षु । अक्ष्णोत्यक्षि, द्वन्द्व चचक्षु क्लीबे । दृश्यतेऽनया दृक्, द्वन्द्वास्त्रियाम् । अस्यतेऽस्रु, अस्र च । अश्नुत आननं अश्रु । वाष्पो नानार्थे ॥ ९३ ॥ वह्यमिति शेष । अपकृष्टावङ्गादपाङ्गौ । कटे क्षिपति कटाक्ष , अपा- ङ्गेन दर्शन यत्र, नेत्रविभागाख्यम् । कीर्यते शब्दोऽस्मिन्कर्ण । शब्दस्य ग्रहणेन शब्दग्रह । श्रूयतेऽनया श्रुति । शृणोति श्रव , असन्त क्लीबे । श्रोत्र च ॥ ९४ ॥ शीर्यते जरसा शिर । एव कुमारशीर्षयो- र्णिनि ( सू० ) इति लिङ्गाच्छीर्षं प्रकृत्यन्तरम् । मूर्च्छति मूर्धा, पुमान् । मस्यति परिणमते मस्तकम् । कं वराङ्ग च नानार्थे । चीयते चिकुर , चिहुर प्राकृते कस्य हादेशात्, सस्कृतेऽपीति दुर्गः- कुन्तला मूर्धजा हस्ताश्चिकुराश्चिहुरा कचा इति । कुन्ताकार लाति कुणति वा कुन्तल । वल्यते वाल , ज्वल- दिव णो वा ( ज्वलितिकसन्तेभ्यो णः ) । कचन्ति कच । के शेते केश । शिरसिजश्च ॥ ९५ ॥ केशानां समूहे, अचित्तहस्तिधेनोष्ठक् ( सू० ), केशाश्वाभ्यां यञ्छावन्यतरस्याम् ( सू० ) । अल्यन्ते भूष्यन्तेऽलका । चूर्णकाख्या कशा ( चूर्णकुन्तला ), चर्चराख्य । कुरलाश्च । भ्रामयन्ति भ्रमरप्रतिकृतयो वा (भ्रमरका )। काकस्येव पक्ष । शिखेव दृश्यते शिरसि खण्डयत वा शिखण्डक । क्षत्रियाणा चूडा काकपक्ष इति गौड. ॥ ९६ ॥ कृणत्त्यर्णां, कं वृणोति वा कबरी, जानपदकुण्डगोणेति ( सू० ) ङीष् । केशरचना ।

कबरी केशवेशोऽ(ओ)थ धम्मिल्लः संयताः कचाः ।
शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ॥ ९७ ॥
वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ।
पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
तनूरुहं रोम लोम तद्वृद्धौ स्म(श्म)श्रु पुंमुखे ।
आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते त्रिष्वलंकर्तालंकरिष्णुश्च मण्डितः ।
प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥
विभ्राड् भ्राजिष्णुरोचिष्णू भूषा तु स्यादलंक्रिया ।
अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् ।
चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ १०२ ॥
बालपाश्या पारितथ्या पत्रपाश्या ललाटिका ।
कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥

---

संयता बद्धाः । कम्वि मिलति धम्मिल्लो नृत्ताद्यः, धनिः सौत्रो वा । धम्मेल्लं इति सन्याः । शेते मूर्ध्नि शीर्ष्ण(शस्य)ते वा शिखा, शीङ् स्वप्ने (उ०) । चोद्यते चूडा । प्रशस्ताः केशाः केशपाशी । शिखेत्येव, (सटा) षट अवयवे । (जटा) जट संघाते ॥ ९७ ॥ (वेणिः) वेञ् गतौ । शिरसि भवः शीर्षण्यः, शीर्षश्छन्दसि (सू०) इति यत्, ये चतद्धिते (सू०) इत्यत्र वाऽकेशेष्विति (वा०) शिरसः शीर्षन्, शिरस्यः । विशदोऽन्योन्यासंपृक्ते—अक्लिन्ने स्नानादिनिर्मले वा, शदॢ शातने । कचादिस्पर्शनिर्देशः, केशपाशः, केशपक्षः, केशहस्तः, प्रशंसावचनैश्च (सू०) इति समासः ॥ ९८ ॥ शिरसोऽन्यत्र रोहति रोम । रमन्ते रैक्यालोम, लूयते वा । पुंमुखे रोमवृद्धिः, समश्नुते श्मश्रु । दाढिकेति । व्यञ्जनं नार्थे । आकल्प्यत आकल्पः । वेशोऽपद्दृश्यं वेषः, विषति वेशयतीत्येके दारव्यं शमाहुः, कर्णेवेषायत् (सू०) इत्यत्र स्मा विकारः । नेत्रयोः पथ्यं (नेपथ्यं) वस्त्रादिरचना । प्रतिकृतं कर्म प्रतिकर्म । प्रसाध्यतेऽनेनाङ्गं प्रसाधनम् । आकल्पो इत्येके तद्भवत्, वेषो हि वस्त्रालंकारमाल्यप्रसाधनैरङ्गशोभा, प्रसाधनं तु स्नानाभ्यङ्गं तैलमर्दनादिना ॥ ९९ ॥ एते दश नाम्नि वैशिष्ट्यवतः । (अलंकरिष्णुः) अलंकृञ्निराकृञ् इति (सू०) इष्णुच् । परिष्कृते स्म, संपर्युपेभ्यः इति (सू०) सुट् ॥ १०० ॥ भ्राजते तच्छीलो भ्राजिष्णुः, भुवश्च (सू०) इति चाद् (भ्राजतेः) इष्णुच् । (अलंक्रिया) अलंकारोऽस्या शोभा । करणे भूषणे ॥ १०१ ॥ त्रैलिङ्गो नार्थे । मुखे कुट्यते मुकुटं, मङ्क्यतेऽनेन वा (मकुटं) । किरति किरीटम् । चूडायां च । तरलीति चेतः, तरलित तरलः । नायके नमार्थे ॥ १०२ ॥ बालपाशे साधुः बालपाश्या, बालबन्धनार्थं मुक्तावल्यः, तत्कुसुमादिकृतिः, दलेषु पत्रावलूहो वा । परितस्थिता भवा पारितथ्या, पत्री तस्या वा, कौन्द्रादिः । पत्रपाश्या तद्रूपः पत्रपाशा । ललाटमलंकरोति ललाटिका, कर्णललाटात्कनलंकारे (सू०) । कर्णालंकारस्तालपत्रं कर्णिका । कुण्डं स्याति कुण्डलम् । कर्णे वेष्टयतेऽनेन कर्णवेष्टनम् । त्रिभ्यः पदः कर्णालंकारा इत्येके ॥ १०३ ॥ ग्रैवेयम् अलंकारो ग्रैवेयकं,

ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका ।
स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ॥ १०४ ॥
हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिकः ।
हारभेदा यष्टिभेदाद् गुच्छ(त्स)गुच्छा(त्सा)र्धगोस्तनाः ॥ १०
अर्धहारो माणवक एकावल्येकयष्टिका ।
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।
केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ॥ १०७ ॥
साक्षराङ्गुलिमुद्रा सा कङ्कणं करभूषणम् ।
स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना स्त्रियाम् ॥ १०८ ॥
क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ।
पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥ १०९ ॥
हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका ।
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥ ११० ॥
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ।
कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ॥ १११ ॥

अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ।
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ।
क्षौमं दुकूलं स्याद् द्वे तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥
स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः ।
दैर्घ्यमायाम आनाहः परिणाहो विशालता ॥ ११४ ॥
पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ।
वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५ ॥
सुचेलकः पटोऽस्त्री ना वराशिः( सिः ) स्थूलशाटकः ।
निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ॥ ११६ ॥
अन्तरीयोपसंव्यानपरिधानान्यधोंशुके ।
द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥
संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् ।
नीशारस्तु प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥

---

छेदः क्षालनं भोगश्चाहननं तद्रहितमनाहतम् । प्रोयतेऽस्या प्रवाणी तन्तुवायशलाका सा निर्गतास्य ( निष्प्रवाणि ), निष्प्रवाणिश्च ( सू० ) इति साधुः । तन्त्रादचिरापहृते ( सू० ) इति कनि तन्त्रकः । उद्गम्यतेऽभिलष्यते– उद्गमनीयम् । युग्ममविवक्षित, यल्लक्ष्यम्– गृहीतपत्युद्गमनीयवस्त्रेति ( कु० सं० ) ॥ ११२ ॥ लकुचवटादिपत्त्रेषु कृमिलालोर्णाकृतं पत्त्रोर्णम्, पृषोदरादित्वात् ( समासः ) । क्षुमाया विकारः क्षौमम् । दुयते क्षुमाया आकृष्यते दुकूलम् । निवीयत आच्छाद्यते निवीतम्, व्येन् संवरणं, निवृतमिति सुभूतिः ॥ ११३ ॥ दस्यन्ते दशाः, पुंसीत्येके । वस्यन्ते याभिस्ता वस्तयः, अच्छिन्नदशस्य वस्त्रस्याच्छादनाङ्गत्वात्, वर्तय इत्येके । आनह्यतेऽनेनानाहः, सर्वेनेदम् । (परिणाहो विशालता) विस्तारस्या ॥ ११४ ॥ पट इवाचरति पटति, सर्वप्रातिपदिकेभ्यः क्विब्वा (वा०) इत्येके, ततः शत्रन्ताद् भूतपूर्वे चरट् ( सू० ) । नक्तं भवो नक्तकः, नजते वा, ओणजी व्रीडे, उद्ध्वस्य येन पूयते नत स्त्रीय तत्तुल्येऽपि वस्त्रे वर्तते । कल्पते कर्पटः । वस्यतेऽनेनाङ्गं वासः, असन्तं क्लीबे । चीयते चेलम्, चैलमित्यसत्, चिल वसने । अंशुमन्तन्तुवायत्यंशुकम् । प्रोतः सिचयश्चीर च ॥११५॥ पटति विस्तीर्यते पटम्, अर्धर्चादि चिन्त्यं द्वयोर्दर्शनात् । वृणोत्यङ्गं वराशिः, ना पुंलिङ्गः । चत्वार एकार्था इत्येके । निचोल्यतेऽनेन निचोलः येन तूलशय्यादि प्रच्छाद्यते, चुलिः सौत्रश्छेदस्त्वं वा । रमतेऽस्मिन् रल्लकः । काम्यते कम्बलः, कम्बलः कमनीयो भवतीति निर्वचनात् ॥११६॥ अन्तरे भवमन्तरीयं, गहादित्वाच्छः (सू०) । उपसंवीयतेऽनेनाङ्गमुपसंव्यानम् । प्राव्रियतेऽनेनाङ्गं प्रावारः, वृणातेराच्छादने (सू०) घञ् । उत्तर ऊर्ध्वाङ्ग आसज्यत उत्तरासङ्गः । (बृहतिका) बृहत्याआच्छादने ( सू० ) कन् ॥ ११७ ॥ संवीयतेऽनेन संव्यानम् । उत्तर ऊर्ध्वे भवमुत्तरीयम् । चोल्यते छाद्यतेऽनेन चोलः, आप्रपदीनं कञ्चुकम् । कूर्परे स्यते कूर्पासः स्त्रीणां कञ्चुलिकाख्यः । निशीर्यते शीतादनेन नीशारः, शॄवायुवर्णनिवृतेष्विति ( श्रा० ) घञ्, यल्लक्ष्यम्– गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः ॥११८॥ कर्णौरथांच्छादकमंशुकमधोंशुकम् । चण्डं भगमताति चण्डातक, यस्य चरनकोमप्रथा । पादाम प्रपद,

अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ।
स्यात्त्रिष्वाप्रपदीन तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ।
प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥ १२० ॥
परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ।
उद्वर्तनोत्सादने द्वे क्लीबे आप्लाव आप्लवः ॥ १२१ ॥
स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ।
अनुबोधः पत्त्रलेखा पत्त्राङ्गुलिरिमे स्त्रियौ ॥ १२२ ॥
तमालपत्त्रतिलकचित्त्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ॥ १२३ ॥
काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतनम् ।
रक्तसंकोचपिशुनं धी( धी )रलोहितचन्दनम् ॥ १२४ ॥
लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।
लवङ्गं देवकुसुमं श्रीसञ्ज्ञमथ जायकम् ॥ १२५ ॥

---

आ प्रपदादाप्रपद, आप्रपदप्राप्नोति ( सू० ) इति ख ॥ ११९ ॥ वितन्यते वितानः । उपरि लोच्यत उल्लोच , उल्लोच्यतेऽपनीयतेऽनेनातपादि वा, चन्द्रकाख्य । कदर्कापि । दूष्यतेऽनेनाऽयदर्शनं दूष्यम् । आद्य-शब्दात्पटकुटी । पञ्कुडय गुणशालि[ लय ]नी स्थूला[ ल ] च । प्रतिसिनोति प्रतिबध्नाति प्रतिसीरा । जवन्त्यस्या जवनिका । तिरस्करोति छादयति तिरस्करिणी काण्डपटाख्या । कश्चित्– पर्यङ्किका परिकरः पर्यङ्कश्चावसक्थिका । अञ्चल स्वशुकान्ते नीवी सारसनमुच्चय ॥ १२० ॥ मलपरिमार्जनार्थे क्रिया परि-कर्म स्नानोद्वर्तनादि । मार्जन मार्ष्टि शुद्धिमात्रम्, वसेरिन ( उ० ) इति बाहुलकात्ति , मृजश्रस्जेति ( सू० ) प , मृजेर्वृद्धि ( सू० ) । मृजति षिद्भिदादिपाठादङ् ( सू० ) । उत्साद्यते मलोऽनेनोत्सादनम् । छद अपवारणे, उच्छादनमिति तु सभ्या । ( आप्लाव , आप्लव ) विभाषाऽऽङि रुप्लुवोरिति ( सू० ) वा घञ् । मज्जन च ॥ १२१ ॥ चर्च्यतेऽनयाङ्ग चर्चा । चर्चिकाया चर्चने साधु चार्चिक्य चन्दनादिना पुण्ड्रादि । तिष्ठत्यङ्गे स्थासकः । चर्चिक्य त्वपभ्रष्टम् । अनुबोध , यथा कस्तूरिकादेर्गन्धादिना । पत्त्राकृ-तिर्लेखा ( पत्त्रलेखा ) । (पत्त्राङ्गुलि ) द्राविडकादि( षु ) लिङ्गादिभेदेन कपाले पत्त्रभङ्ग ॥ १२२ ॥ तमालपत्त्राकृति कस्तूर्या ललाटे तमालपत्त्रम् । तिलकाकृति तिलकम् । चित्रकं नानावर्णम् । विशिनष्टि विशेषकम् । इत्थ तिलकभेदा एते, पर्यायत्व त्वदूरविप्रकर्षात् । अत्र द्वितीयचतुर्थौ तिलकविशेषकौ पुन-पुंसकयोः । पुण्ड्र च । कु कौति कुङ्कुमम् ॥ १२३ ॥ अग्नेरिव शिखा केसरोऽस्याग्निशिखम् । व्रियते वर, ग्रहवृ– इत्यप् ( सू० ) । बह्लीकदेशज ( बाह्लीक ), यदयोध्यत्तरदिग्विजये– दुधुवुर्वाजिन स्कन्धाल्लग्न-कुङ्कुमकेसरान् । पावयत्यङ्ग पीतनम् । रञ्जनाद्रक्तम्, अत एवासृक्सञ्ज्ञम् । संकोचस्य पिशुन सूचकम् । वीर स्थिररागम् । लोहित चन्दनमिव । वर्ण्य च । घुसृण देवनाम् ॥ १२४ ॥ लक्ष्यते लाक्षा । रक्षति देह राक्षा, रलयोरैक्यं वा । जायते जतु । यौति यावक । न लज्जते स्म– अलक्तकः, अलति वा । द्रुमस्या-मय इव निर्यास । धन्वन्तरिस्तु– लाक्षा पलङ्कषा राक्षा दीप्तिश्च क्रमिजा जतु । कृतघ्नानद्रुमता च द्रुमव्याधिरलक्तक ॥ लूयते लवङ्गम् । देवस्तुतिमत्कुसुम देवाना वा । ( श्रीसञ्ज्ञ ) श्रीपर्यायम् । ( जा-यकं जायकाख्यपर्वतभवम् ॥ १२५ ॥ ( कालीयक ) कालवर्णसारम् । वशाभ वशकम्, वंशिकेत्येके ।

कालीयकं च कालानुसार्यं चाथ समार्थकम् ।
वंशकागुरुराजार्हलोहकृमिजजोङ्गकम् ॥ १२६ ॥
कालागुर्वगुरु स्यात्तु मङ्गल्या मल्लिगन्धि यत् ।
यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ ।
तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ पायसः ॥ १२८ ॥
श्रीवासो वृकधूपोऽपि श्रीवेष्ट( पिष्ट )सरलद्रवौ ।
मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ॥ १२९ ॥
कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्
तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥
तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चाथ जातीकोशजातीफले समे ॥ १३२ ॥
कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।
गात्रानुलेपनी वर्तिर्वर्णकोऽस्त्री विलेपनम् ॥ १३३ ॥

---

न गुरु–अगुरु । कालागुरु कालानुसार्यम् । रोहति लोहम् । कृमिभिर्जन्यते कृमिजम् । जोङ्गक गिरिजम् । अगुरु–अगुरु प्रवरलोह कृमिजजोङ्गकमिति (शाश्वत) ॥१२६॥ मल्लिकापुष्पगन्धगुरु मङ्गल्याख्यम् । यक्षाणां धूपः यक्षधूप । सर्जवृक्षस्य रस सर्जरस । राति प्राशं रालः, राल रि ॥ १२७ ॥ बहूनि रूपाणि नानारूपाणि । वृकधूपनामि वृकधूप । तुरुष्को यवनदेशज । सिह्लको द्रव्यान्तरे सह विहित स्वरूपत्वात् । पिण्डाख्यो धूप, सिल उच्छे, सुगन्धिद्रव्यमात्रत्वात् पुनरिहोक्त । पयसो दुग्धस्य विकारः धूलि. पायस ॥ १२८ ॥ श्रिया वासो वेष्टस्य निर्यासः, वेष्टते वेष्टः । सरलस्य देवदारुभेदस्य द्रवो निर्यास । विकसति सौगन्ध्येन कस्तूरी, के मृगे वा । कोलति कोलकम् ॥ १२९ ॥ ककते कक्कु (कक) कोलति कक्कोलकम् । कोशे फलमस्य कोशफलम् । कल्पते कर्पूर । घनसार घनोऽस्य सारः, घनसारश्च । चन्द्रसंज्ञो चन्द्रसंज्ञकम् । हिमा शीतला वालुका च हिमवालुका ॥ १३० ॥ भद्रा श्रीरस्य । चन्दति आह्लादयति चन्दनम् । तैलपर्णिकगोशीर्षे गिरी आकरावस्य । हरिचन्दन चन्दन, हरि कपिल वा, नानावर्णत्वात् पीतमपि । श्रीखण्ड च ॥ १३१ ॥ तिलस्येव पर्णमस्य तिलपर्णी– आकोडमा हलके । पत्राङ्गानि पत्राङ्गम् । रञ्जनं च पत्राङ्ग रक्तचन्दनम् । (कुचन्दन) कुचन्दनम् । जात्याः कोश जातीकोशम् जातीफलम् ॥ १३२ ॥ एते मिश्रितैर्द्रव्यैर्यक्षकर्दमः । कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः, धन्वन्तरिस्तु– कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा । महासुगन्धमित्युक्त नामतो यक्षकर्दम ॥ द्वौ द्वौ मिश्रद्रव्यविवेके । वर्तिर्द्वे स्त्रियां वर्तिका ॥ १३३ ॥ चूर्णे पटवा-

चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ।
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ १३४ ॥
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ॥ १३५ ॥
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षकं तु तत् ।
यत्तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ ॥ १३६ ॥
रचना स्यात्परिस्यन्द आभोगः परिपूर्णता ।
उपधानं तूपबर्हः शय्यायां शयनीयवत् ॥ १३७ ॥
शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।
गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥ १३८ ॥
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ।
प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ॥ १३९ ॥
दर्पणे मु(म)कुरादर्शौ व्यञ्जनं तालवृन्तकम् ॥ १४० ॥

इति नृवर्गः । ६

---

सादिक्षोद । वास्यते सुगन्धीक्रियते यैर्यज्यम नैर्मिश्रैस्ते वासयोगाः । भाव्यते मोल्यते भावितं, भुवोऽवकल्कने णिच् (धा० सू० ) । वास्यते छाद्यते स्म, वस स्नेहच्छेदापहरणेषु । गन्धद्रव्यैर्भावितं पुष्पाद्यैर्वासितमित्यर्थः । संस्कारास्तिलादीनां गुणाधानम् । आद्यशब्दाद्धूपादिभिः । मालैव माल्यं, चातुर्वर्ण्यादित्वात्ष्यञ् (चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् ) । माल्यते धार्यते माला । सृज्यते स्रक्, ऋत्विग्दधृगिति ( सू० ) साधुः । माल्यमित्येव, गर्भस्थत्वाद्गर्भकः । माल्यमित्येव, मध्यात्प्रभ्रष्टकम् । ललाममिव ललामकं मुण्डमालाह्वयम् ॥ १३५ ॥ कण्ठाद्वक्षस्यवलम्बमानं माल्यं प्रालम्बम् । विकक्षाया भवं वैकक्षकं, यज्ञोपवीतन्यायेन माल्यम् । माल्यमित्येव, आपीड्यत आपीडः । शेते शिरसि शेखरः । उत्तंसोऽपि ॥ १३६ ॥ शिल्पादिना रचना, अन्यापि । आभुज्यतेनेनाभोगः । उपधीयतेऽस्मिन् शिरः उपधानम् । उपवृह्यतेनेनोपबर्हः, वृंहते वा— उपबर्हः शिरोनिवेशनम् । शेरतेऽत्र शय्या, सज्ञायासमजेतिक्यप् ( सू० ) । ( शयनीयः ) कृत्यल्युटो बहुलम् ( सू० ) इत्यधिकरणेऽनीयर् । तूलिकापि ॥ १३७ ॥ मञ्च्यते धार्यतेनेन मञ्चः । पर्यङ्क्यते पल्यङ्कः, परेश्च घाङ्कयोरिति ( सू० ) वा लत्वम् । खं गत्येना श्रान्तः खट्वा । गाते गा, गच्छन्निन्दुको गुडको गेन्दुकः, गिन्दुक इत्येके, ( गे ) गगन— इन्दुरिवेति वा । कन्द्यतेऽर्थ्यते क्रीडार्थिभिः कन्दुकः, कं शिरो दुनोति वा नमनानमनेक्षणात् । वाटा भारते । च्युतादानक्रीडाया गुलिका गिरिकश्च तौ । ( प्रदीपः ) प्र स्वार्थे मेरुसुमेरुवत् । [ कज्जलध्वज , दशन्धनो गृहमणि स्नेहाशश्च ] । पीयत उपवेशनेन प्रस्यते पीठम् ॥ १३८ ॥ समुद्यते समुद्गच्छति वा समुद्गकः । संपुट्यते श्लेष्यते संपुटकः, भूषणधावपनम् । प्रतिगृह्णात्यवलिकादि प्रतिग्राहः, विभाषाग्रह ( सू० ) इति णः । पतद् गृह्णाति पतद्ग्रहः । कर्षण्याख्या, प्रसाध्यन्तेनया केशाः । कङ्कते कङ्कनी, कङ्कान्दन्तांस्तनोति वा । पिंष्टेन कुङ्कुमचूर्णादिनाततिः पिष्टातः । पटो वास्यतेनेन पटवासः ॥ १३९ ॥ दृप्यन्त्यनेन सुवेषा दर्पणः । मङ्क्यते मण्ड्यतेनेन मु(म)कुरः । आदृश्यते रूपमस्मिन्नादर्शः । आत्मदर्शोऽपि । व्यजति वातोनेन विक्षिप्यते वा व्यजनम् , तालस्येव वृन्तमस्य तालवृन्तम् । तालस्यवृन्तैरभ्यत इत्येके [ तालवृन्ताभासस्त्वस्येत्येके ] ॥ १४० ॥ इति नृवर्गः । ६

संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानो वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥
विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः ॥ २ ॥
महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ।
विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्युतः ॥ ४ ॥
विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ॥ ५ ॥
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।
दूरदर्शी दीर्घदर्शी श्रोत्रियश्छान्दसः समौ ॥ ६ ॥

---

संतन्यतेऽनया संततिः । सूयते जन्यते कुल्यते वानेन । अन्वीयतेऽन्वयः । वय[न्य]ते जन्यते वंशः । अन्ववीयतेऽन्ववायः । व्रियन्ते वर्ण्यन्ते वा वर्णाः ॥ १ ॥ चत्वार एव वर्णाः, स्वार्थे ष्यञ् ( चतुर्वर्णादीनां स्वार्थउपसंख्यानम् ) । राजबीजमस्यास्ति राजबीजी । राजवंशे साधुर्भवो वा राजवंश्यः । बीजे साधुर्भवो वा यथा, सूर्यवंश्यो रामः, यत्प्रकरणे– अन्येभ्योऽपि दृश्यते (वा०) ॥ २ ॥ कुलस्यापत्यं कुलीनः । अगारेभ्यः कर्मभ्यो यातः आर्यः, अरणीयो गम्यो वा । सभायां साधुः सभ्यः । संश्चासौ जनश्च सज्जनः सज्जनयते वा सज्जनः । साध्नोति परकार्यं साधुः । आमुष्यायणोऽमुष्यपुत्रश्च । ब्रह्म वेदो ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतम्, तच्चरत्यर्जयत्यवश्यं ब्रह्मचारी वर्णी । गृही गृहमेधी गृहाश्रमी ज्येष्ठाश्रमी । प्रतिष्ठन्तेऽस्मिन्प्रस्थः, वनप्रस्थे भवो वानप्रस्थो वैखानसमाख्यः । भिक्षते तच्छीलो भिक्षुर्यतिः, सनाशंसभिक्ष उः ( सू० ) । अस्मिंश्चतुष्के, आश्राम्यन्ति तत्रत्या अस्मिन्नाश्रमः प्रत्येकं वर्तते ॥ ३ ॥ मातुर्यदग्रे जननं द्वितीयं मौञ्जीबन्धनादिति द्विजातिः । अग्र– आदौ– अग्रात्मुख्याद्वा जन्मास्य, यच्छ्रुतिः– ब्राह्मणोऽस्य मुखमासीत् । वाडव इवावृतः । विशेषेण प्राति पूरयति विप्रः क्षिपाति विपाति पाति वा विप्रः, विप क्षेपे । ब्रह्मणोऽपत्यं ब्राह्मणः । जातिमात्रोपजीवी स्याद्ब्रह्मबन्धुर्ब्राह्मणब्रुवः । षट् कर्माणि ब्राह्मणस्य– अध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति ॥ ४ ॥ वेत्ति विद्वान्, विदेः शतुर्वसुः ( सू० ) । विपश्चिन्त्यते विपश्चित् । दोषाञ्जानाति ज्ञात्वा त्यजतीति दोषज्ञः । सन् विद्यमान उत्तम इत्यर्थः, अन्ये त्वन्यथाहुः । शोभनं ध्यायति सुधीः, अन्येभ्योऽपि दृश्यते ( सू० ) इति क्विप् संप्रसारणं च । ओकः स्थानं वेत्ति कोविदः, इत् शब्देऽप्यत्र । धियमीरयति धीरः । मनस ईष्टे, मनीषा इच्छास्य वा मनीषी । जानातीति ज्ञः, इगुपधज्ञा ( सू० ) कः । प्रज्ञ एव प्राज्ञः, प्रज्ञादिभ्यश्च ( सू० ) इत्यण्, प्रज्ञास्त्यस्य वा, प्रज्ञाश्रद्धा ( सू० ) णः । संख्या सम्यग्ज्ञानमस्त्यस्य संख्यावान्, संख्या विचारणा वा । पण्डते जानाति पण्डितः, पडि गतौ, सर्वे गत्यर्था ज्ञानार्था इति, पण्डा धीः संजातास्य वा । कवते वर्णयति कविः, कविताधि ॥ ५ ॥ सुवति सूरिः । कृतमस्यास्तीति कृती कृतकृत्यः । कर्षति विविक्ते कृष्टिः । लब्धो वर्णः प्रतिष्ठा येन स लब्धवर्णः । चष्टे विचक्षणः । ( दूरदर्शी ) अग्रपश्चानुदर्शी इत्यर्थः । ( श्रोत्रियः ) श्रोत्रियश्छन्दोऽधीते ( सू० ), श्रोत्रं श्रद्धा वा कृतकर्मेति । छन्दोऽधीते छान्दसः । मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि । वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि ॥ नैयायिकस्त्वक्षपादः स्यात्स्याद्वादिक आर्हतः । चार्वाकलौकायतिकौ समार्थौ नास्तिकादिकौ ॥ ६ ॥ उपेत्याधीयतेऽस्मादुपाध्यायः, इङ-

उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद् गुरुः ।
मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च स सोमवति दीक्षितः ।
इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥ ८ ॥
स गीष्प( र्प )तीष्ट्या स्थपतिः सोमपीथी तु सोमपाः ।
सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।
लब्धानुज्ञः समावृत्तः सुत्वात्वभिषवे कृते ॥ १० ॥
छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ।
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् ।
पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥

---

ध्येते ( सू० ) घञ् । गृणात्युपदिशति गुरुः, यन्मनुः – निषेकादीनि कर्माणि यः करोति यथाविधि । सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ निषेको गर्भाधानविधिः । आदिशब्दात्पुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौडोपनयनादीनि । आचरणीयः सेव्य आचार्यः, आचार्यं प्राहयन्तीति नैरुक्ताः, मन्त्र( व्याख्या )कृद्वेदाध्यापनाद्वेदशिक्षाव्याकृदुपनयनेन द्विजत्वापादनात्, यदाह– उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ स्वाम्येनादिशत्यादेष्टा, आदिष्टीति पाठे– आदिष्टमनेनेति, इष्टादिभ्यश्च ( सू० ) इतीनिः, क्तस्येन्विषयस्य कर्मण्युपसंख्यानात् ( वा० ) सप्तमी । व्रती सनियमः ॥ ७ ॥ यजते यजमानः, पूङ्यजोः शानन् ( सू० ) । स व्रती सोमवत्यध्वरे दीक्षिताख्यः, दीक्षा संजातास्येति । सोमयागमग्निष्टोमादिक्रतु, यद् गौतमः – अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सोमसंस्थाः । यजनमिज्या, व्रजयजोर्भावे क्यप् (सू०) । अत्यर्थं यजति तच्छीलो यायजूकः, यजजपदशां यङः ( सू० ) इत्यूकः । ( यज्वा ) सुयजोर्ङ्वनिप् ( सू० ) ॥ ८ ॥ स यज्वा बृहस्पतिसवनहेतुना, स्थापयतीति स्थपतिः । पानं पीथः, पातृतुदिवचीति थक् ( उ० ), सुमास्थेतीत्वम् ( सू० ), सोमपीथी तु पाचयाः वेदु । सर्ववेदायं, दीक्षितस्तु तत्कालम् । सर्वे विन्दत्यस्मात्सर्ववेदाः, असुन् ॥ ९ ॥ अनूक्तवान्, उपेयिवाननाश्वाननूचानश्च ( सू० ) इति क्वानचि साधु । प्रोच्यते प्रवचनं वेदः । अधीतमनेनाधीती, इष्टादिभ्यश्च ( सू० ) इति निः, क्तस्येन्विषयस्य कर्मण्युपसंख्यानात्सप्तमी ( वा० ) । अधीत्य गुर्वाज्ञया गुरुगृहात् समावर्तते स समावृत्तः– स्नातकाख्यः, गुरुगेहादनावृत्तस्नातको हि न कथ्यते ॥ सुनोति सुत्वा सुयजोर्ङ्वनिप् ( सू० ) । अभिषवः सोमकुट्टनमथानम् ॥ १० ॥ छत्रमेव शीलमस्य छात्रः, छत्रादिभ्यो णः ( सू० ), छत्रेण गुरुसेवा लक्ष्यते । गुरोरन्ते वसत्यन्तेवासी– शयवासवासिष्वकालात् ( सू० ) सप्तम्या अलुक् । शासनीयः शिष्यः । शिक्षाया भवाः शैक्षाः । प्रथमकल्पः आद्यारम्भः प्रयोजनमेषां तमधीयते वा प्राथमकल्पिकाः । तुल्यवेदास्तुल्यव्रतास्तुल्याचाराश्चान्योन्यं, समानं ब्रह्म चरन्ति सब्रह्मचारिणः, ब्रह्म वेदो ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतमिति, एकस्मिन्वेदे व्रतमाचरन्ति वा, व्रते ( सू० ) इति णिनिः, चरणे ब्रह्मचारिणि ( सू० ) इति समानस्य सः ॥ ११ ॥ ( सतीर्थ्याः ) समानतीर्थे वासी ( सू० ) इति यत्, तीर्थे ये ( सू० ) इति सत्वम् । तरन्त्यनेनाविद्यां तीर्थं गुरुः । अग्निं चितवानग्निचित्, अग्नौ चेरिति ( सू० ) क्विप् । इत्यं ह किलेति सुपरम्पर्यं स्वितिहेति, ततः स्वार्थे ष्यञ्– अनन्तावसथेतिहभेषजाञ्ञ्यः ( सू० ) ॥ १२ ॥ उपज्ञायत इत्युपज्ञा, इदं प्रथमतया ज्ञानं, चन्द्रस्योपज्ञा

कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसके ।
कोटिरस्यादनी गोधे तले ज्याघातवारणे ॥ ८५ ॥
लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ।
स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८६ ॥
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ।
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८७ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८८ ॥
निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ।
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८९ ॥
तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिऋष्टयः ।
कौक्षेयको मण्डलाग्रः करवा( पा )लः कृपाणवत् ॥ ९० ॥

---

स्यान्ति गाण्डीवं, गाण्ड्यजगात्संज्ञायामिति ( सू० ) वः, गाण्डिरिदन्त ईदन्तश्चात्र प्रश्लिष्य निर्दिष्टः । पुंनपुंसके इति प्रथमाद्विवचनमजहल्लिङ्गम् । अस्य धनुषः प्रान्ते कोटिः, कुटतीति । अटत्यटनी, अरत्नि. टनी इत्येके । गोधा च गोधा च गोधे द्वे, सरूपाणामित्यान् , गुध परिवेष्टने । तल चर्मादिमयो ज्याघातवारः ॥ ८५ ॥ ( लस्तकः ) लस श्लेषणे । मूर्वाख्यतृणस्य विकारो मौर्वी । जिनाति ज्या । जीवापि । शिञ्जते शब्दायते शिञ्जिनी । गुण्यतेऽभ्यस्यते गुणः । जङ्घयोरधारि( वि )निवृत्तौ स्थितिः स्थानकमिति तु विशेषः । आलीढं भुवमालीढम् । आदिशब्दात्समपादं वैशाखं मण्डलं च धनुर्वेदप्रसिद्धम् । भरतस्त्वन्यथाह– वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम् ॥ ८६ ॥ लक्ष्यत इति ( लक्ष ), घञ् ण्यत् च । शृणाति शरः हिंस्रस्तस्मै हितं शरव्यं, उगवादिभ्यो यत् ( सू० ), शरैरीयते छद्यते वा । ( उपासन ) असु क्षेपणे । पर्पति स्रियते– अजुजा पृषत्कः, पृषत्पत्रमस्येति धनुर्वेदः– पुङ्खः शरस्तथा शल्यं पक्षस्नायुजतूनि षट् । वणति वध्यतेऽनेन वा बाणः । विशीयते विशिखः, शिञ् निशाने, विविधशिखो वा । अजिह्मग ऋजुगामी ॥ ८७ ॥ कल्यते क्षिप्यते कलम्बः । मार्गयति लक्ष्यं मार्गणः । शृणाति शरः । रोप्यते निखन्यते रोपः । इष्यति– इषुः, इष गतौ । प्रक्ष्वेडनो नानार्थे । प्रक्ष्वेडते प्रक्ष्वेडनः, क्ष्विदे रूपं, क्ष्वेडितेर्नियः । नरमयति, नराच एव नाराचः, स्वार्थेऽण् , सर्वलोहोऽयम् । ( पक्ष ) पक्ष परिग्रहे । वजति गच्छत्यनेन वाजः, न्यङ्क्वादेः ( सू० ) अकुत्वम् ॥ ८८ ॥ निरस्तान्ता वाच्यलिङ्गाः । निरस्यते स्म प्रहीयते स्म, क्षिप्त इत्यर्थः । विषेणाक्ते म्रक्षितं, दिह्यते स्म लिप्यते स्म । तूयते पूर्यते शरैस्तूणः, तूर्णाति लिङ्गभेदार्थम् । उपसज्यन्ते निषज्यन्ते च बाणा यत्रेत्युपासङ्गनिषङ्गौ । इषवो धीयन्तेऽत्रेषुधिः । कलापो नानार्थे ॥ ८९ ॥ खड( ण्ड )ति भिनत्ति खड्गः । निष्क्रान्तस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः । चन्द्रवद् हासः प्रभाऽस्य चन्द्रहासः । अस्यतेऽसिः । ऋष्टिः, ऋषेर्गत्यर्थाद् क्तिः, ऋ... ( सू० ) इति प्रकृतिः, हिंसार्थाद्रिषेस्तु रिष्टिः । कुक्षौ भवः कौक्षेयकः, कुक्षिग्रीवीभ्यां ( सू० ) ढकञ् । मण्डलवृत्तमग्रमस्य मण्डलाग्रः । करे वलनमस्य करवालः । कृपाणे कृपाणः, वक्ति कृपणार्थ. ॥ ९० ॥ ( त्सरुः ) त्सर छद्मगतौ । मीयते मन्त्रिवन्ध्ये प्रक्षिप्यते मेखला, यथा सहरतो

त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् ।
फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः ॥ ९१ ॥
द्रुघणो मुद्गरघनौ स्यादीली करवा( पा )लिका ।
भिन्दिपालः सृगस्तुल्यौ परिघः परिघातनः ॥ ९२ ॥
द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।
स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९३ ॥
*वा पुंसि शल्यं शङ्कुर्ना स( श )र्वला तोमरोऽस्त्रियाम् ।*
प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९४ ॥
सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः ।
लोहाभिसा( हा )रोऽस्त्रभृतां राज्ञां नीराजनो विधिः ॥ ९५ ॥
यत्सेनयाभिगमनमरौ तदभिषेणनम् ।
यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९६ ॥

---

हस्तान्न निर्याति। फलति विशीर्यते प्रहारै (फल,फलक) फल, **मुनिना** खड्गचर्मे दृष्ट, अयं तु लोकात् फलकं मन्यते, **यच्छाश्वत** – लाभे शस्ये शराग्रे व्युष्टौ च फलके फलम् । चर्ममयत्वाच्चर्म । संगृह्यतेऽनेनेति संग्राहः, समिमुष्टाविति ( सू० ) घञ्, अस्य चर्मणो मुष्टिर्ग्रहणस्थानम् ॥९१॥ द्रुं वृक्षाद्रं हन्ति द्रुघण, द्राघेणो वा, अयोघनोऽन्य. । मुदं गिरति ग्रसते मुद्गर । हन्यतेऽनेन घन, मूर्तौ घनइति ( सू० ) साधु, **यच्छाश्वत** – वाद्ये मुस्तेऽम्बुदे सान्द्र घन स्याल्लोहमुद्गरे । ईड्यत ईली, एकधारोऽसिस्तुरुष्कायुधम् । करवालात् अल्पे ( सू० ) कन्, तरवालिकेत्येके । भिन्दत पालयति भिन्दिपालः, भिण्डिपालो वा हस्तक्षेप्यो लगुड । सृज्यते सरति वा सृग । परितो हन्ति परिघ, परौ घ इति ( सू० ) ढ घत्वम्, लोहबद्धो लगुड ॥ ९२ ॥ कुठान्वृक्षान् नियर्ति कुठार । स्वं धियति बिभर्ति स्वधिति । पराञ्शृणाति परशु परश्वधश्च, पर्शुश्चापि, यदाह– याष्टीकपारश्वधिकौ यष्टिपर्शुधहेतिकौ । शस्यतेऽनया शस्त्री । असे पुत्रीवाल्पत्वात् । छुरति छिनत्ति छुरिका, क्षुरिकापि ॥ ९३ ॥ शलति विशत्यन्त शल्य । शङ्कतेऽस्माच्छङ्कुरायुधविशेष, **यच्छाश्वत** – सत्त्व कीलकयो शङ्कु शङ्कु प्रहरणान्तरे । अन्यत्रोपचाराच्छल्यम् सर्वान्–लाति सर्वला । स्तोम्यतेऽनेन प्रश्लथ्यत तोमर तु सौवो वा । प्रास्यते प्रासो हस्तक्षेप्य. शल्य । कुणति कुन्त । कोणो गृहादेर्विदिक्– अस्त्र्याख्या, कुण शब्दोपकरणयो । पातत पालि । अश्नुतेऽश्रि । कुटति कोट ॥ ९४ ॥ सर्वेण सैन्येनाभिसरण सर्वाभिसर । सर्वेषामोघो वहन सर्वौघ । सर्वे सनह्यन्तेऽत्र सर्वसनहनम् । शस्त्रभृता राज्ञां य शान्तिको विधि प्रस्थानात्प्राक् स लोहाभिसार, लोहं शस्त्रमभिसार्यते प्रस्थानेनेति । नीरस्य शान्त्युदकस्याजन क्षेपोऽत्र नीराजन, मन्त्रोक्त्या वाहनायुधादेर्निःशेषेण राजन वात्र । नीराजनादनन्तर कर्म लोहाभिसार इति **मुनि** – विधिर्लोहाभिसारस्तु राज्ञा नीराजनोत्तर, **दुर्गो**ऽपि– लोहाभिसारस्तु विधि परो नीराजनान्तरे । दशम्यां दर्शिते कार्य इति । अत एव नीराजनाद्विधिरित्येके पठन्ति ॥ ९५ ॥ ( अभिषेणन ) सेनयाभिपारोऽति ( सू० ) णिच्, उपसर्गात्सुनोतीति ( सू० ) षत्वम् । यान्त्यस्यां यात्रा । व्रजन व्रज्या, व्रजयजोर्भावेक्यप् ( सू० ) । ( प्रस्थानं ) प्रपूर्वस्तिष्ठतेर्ल्युट् । गमे.– ग्रहवृद ( सू० ) इत्यपि गम ॥ ९६ ॥ सैन्यस्य सर्वतो व्याप्तिरासारः, आसि-

युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।
मृधमास्कन्दनं संख्यं समीकं सांपरायि( संपराय )कम् ॥ १०५ ॥
अस्त्रियां समरानीकरणाः कलहविग्रहौ ।
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥ १०६ ॥
अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ।
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥ १०७ ॥
नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले ।
क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा ॥ १०८ ॥
क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् ।
विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ ॥ १०९ ॥
प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् ।
अजन्यं क्लीव उत्पात उपसर्गः समं त्रयम् ॥ ११० ॥
मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ।
अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ॥ १११ ॥

---

न्यवेश्मस्कन्दनम् । संचक्षतेऽस्मिन् संख्यं, सङ्ख्यविरोधार्थः । समीयन्तेऽस्मिन् समीकं, ईङ् गतौ । संपरायो मृत्युः प्रयोजनमस्य सांपरायिकं, [ ठञ् ], विनयादित्वात्स्वार्थे ( सू० ) ठक् ॥ १०५ ॥ सम्यग् अति ( ते ) संगच्छन्तेऽस्मिन् समरः । न नीयन्ते त्यान्यन्नेन नीकम्, अनीकमस्त्रम् च । रणन्ति दुन्दुभयोऽत्र रण, क्वचिद्घोषणैविकल्पादप् ( वा० ) । कल्यन्ते क्षिप्यतेऽत्र कलहः, कल हीनबलं हन्ति वा । विगृह्णन्त्यत्र विग्रहः, ग्रहवृदृ– इति ( सू० ) अप् । संप्रहरन्तेऽन्योऽन्यं यत्र संप्रहारः । अभिपतन्त्यत्राभिसंपातः । कल्यन्तेऽत्र कलिः । संस्फुटन्त्यत्र संस्फोटः, संस्फेट इति युक्तः पाठः, स्फिट अनादरे, भरते तु संस्फेटः । संयुज्यतेऽत्र सगना रथयुगा अत्र वा संयुगः ॥ १०६ ॥ अभ्यामृद्नन्त्यत्राभ्यामर्दः । समाघ्नन्त्यत्र समाघातः । संग्रामयन्तेऽस्मिन् संग्रामः । अभ्यागच्छन्त्यत्राभ्यागमः । आह्वयन्तेऽत्राहवः, आह्वयुद्धे ( सू० ) इत्यप्, संप्रसारणम् । समुदीयन्ते मिलन्त्यत्र समुदायः । संयतन्ते संयच्छन्ति वाऽस्यां संयत् । समयन्ति संगच्छन्तेऽत्र समितिः । आ– अजन्ते क्षिप्यन्तेऽत्राजिः । युध्यन्तेऽस्यां युत्–द् ॥ १०७ ॥ नियतं युद्धं ( नियुद्धं ) । ताम्यन्त्यत्र तुमुलं, टमु, ग्लानौ वा । ( क्ष्वेडा ) क्ष्विदृ अव्यक्ते शब्दे– इति दुर्गः । सिंहानामिव नदनं भटानां सिंहनादः । क्ष्वेडा वा । ( घटा ) घटादयः षितः ( ग० ) इति षिद्भिदादिभ्योऽङ् ( सू० ) ॥ १०८ ॥ क्रन्दन्त्यनेन क्रन्दनं, संरावः, उपसर्गे रुवः ( सू० ) इति घञ् । ( बृंहितं ) बृहि शब्दे । ( विस्फारः ) स्फुर संचलने । पटो हन्यतेऽत्र पटहः । आडम्ब्यते– आडम्बरः, डम्बडम्बस्य क्षरात् ॥ १०९ ॥ प्रगता सभा प्रसभे, सभया युक्तायुक्तविचारेण वर्तते, प्रगु[प्रगुभ]प्रसभं वा । बलादिति निवृत्तो हठः । ( हठः ) हठ प्लुतिशठत्वयोः । स्खलनं मार्गच्युतिः । छलति छिनत्ति छलम् । न जने साधु– अजन्यम् । उत्पतत्यकस्मादायाति– उत्पातः, ज्वलादित्वाण्णः ( ज्वलितिकसन्तेभ्यो णः ) । उपसृज्यतेऽनेनोपसर्गः ॥ ११० ॥ कश्नाति( ते ) चैतन्यमस्मात्कश्मलम् । ( पीडनं ) पीड अवगाहने । ( अभ्यवस्कन्दनं ) छलादाक्रमणमित्यर्थः । धाटी च । राज्ञो न सौप्तिकम् । ( विजयः ) वि– स्वार्थे क्षेपकविशेषणात् ॥ १११ ॥ मूर्छा करण प्रत्ययो दुर्गः । निर्गतं धावनं, यत्र निद्राभ्रंशः प्रतीयते ।
...निवर्तनं निवारण । कन्वेरी पलायनापेक्षा, भेनुस्तुवः, ( सू० ), उदिश्वयनियोगेनिवृत्तः ( सू० ).

वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ।
प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ॥ ११२ ॥
अपक्रमोऽपयानं च रणे भङ्गः पराजयः ।
पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ॥ ११३ ॥
प्रमापणं निबर्हणं निकारणं विशारणम् ।
प्रवासनं परासनं निषूदनं निहिंसनम् ॥ ११४ ॥
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥ ११५ ॥
निर्वापणं विशसनं मारणं प्रतिघातनम् ।
उद्वासनप्रमथनक्रथनोज्जासनानि च ॥ ११६ ॥
आलम्भपिञ्जविशरघातोन्माथ( न्मन्थ )वधा अपि ।
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ॥ ११७ ॥
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ।
परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ॥ ११८ ॥
मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ।
कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ॥ ११९ ॥

---

ऋनियुद्द्रुव- ( सू० ) इति घञ् ॥ ११२ ॥ अपक्रमणम् अपक्रमः ( अपक्रमः ) । भञ्जनं भङ्गः, भञ्जो आमर्दने । पराभूतो ऽभिभूतः इति । णिश् अदर्शने, नश्यति स्म नष्टम्- अदृश्यम् । तिरोधाने स्म तिरोहितं ... ॥ ११३ ॥ अत्राहिंसार्था अष्टादश शब्दा हिंसार्थे ज्ञेयाः, अकर्मकस्य णिचा सकर्मकः । प्रमापणं, मीञ् हिंसायां णिच्, मीनातिमिनोतिदीङां ल्यपि च इति ( सू० ) आत्वं, पुक् । निपूर्वाद् बर्हणं निबर्हणम् । विशारणं, शॄ हिंसायाम् । प्रवासनं, वस निवासे, प्रवासः, एवं निर्वासनम् । असु क्षेपणे ... परासनं च । षूद क्षरणे हिंसायां निषूदनं ... ॥ ११४ ॥ ( संज्ञपनं ) ज्ञपेः ... निर्ग्रन्थनं, ग्रन्थ कौटिल्ये । निस्तर्हणं, तृहि हिंसार्थः ... निर्हणम् । क्षणनं, क्षणु हिंसायाम् ॥ ११५ ॥ निर्वापणं, वै ओवै शोषणे । विशसनं, शसु हिंसायाम् । क्रथनं, क्रथ हिंसायाम् । उज्जसनं, जसु हिंसायाम् ॥ ११६ ॥ आलम्भः, लभिरत्र हिंसार्थः, ( लभेः ) ... ( सू० ) नुम् । पिञ्ज, पिजि हिंसार्थः । विशरणं हिंसनं विशरः । हननं वधः, हनश्च वधः इति ( सू० ) अप्, वधादेशश्च, पक्षे घञि घातः । ( उन्माथः ) मथ संक्लेशने । उन्मादन विदारणं कदन च निशुम्भनम् । ( पञ्चता ) देहारम्भकपञ्चभूतानां ... मरणं ... प्रत्येकं स्वात्मनि ... । कालो मृत्युः ... काल: प्रहरति प्रजाः, तस्य धर्मः ... संहारः । दिष्टस्य कालस्य जीवितावधेरन्तो दिष्टान्तः ॥ ११७ ॥ अन्तः पर्यन्तः । मरणं मृत्युः, द्वयोः पुंस्त्रियोः । निधनं ... निपूर्वो धाञ् निर्नाशार्थ इति ... । त्रयोऽपि ... हिंसा ... प्रमापणम् । परागता असवोऽस्य परासुः । ... चतुर्दशस्वेते ... मरणे वर्तन्ते । सर्वेऽपि वाच्यलिङ्गाः ॥ ११८ ॥ चीयते स्म चिता । चेतव्या चित्या, चित्याग्निचित्ये चेति ( सू० ) साधु । चीयते चितिः । एते प्रेतदाहार्थेन्धनस्थाने वर्तन्ते । कस्य शिरसो बन्धोऽत्र कबन्धः, केन बन्धो वा । क्रियया युक्तं नृत्यादिना मूर्धरहितं कलेवरम् । ... ॥ ११९ ॥ श्मशानं श्मशानम् । पितृवनम् ... शवानाम् ... । प्रेतवन ... च । कुणपः ... पानि ... पन-

श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ।
प्रग्रहोपग्रहौ वन्द्यां कारा स्याद्बन्धनालये ॥ १२० ॥
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् ।
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥ १२१ ॥

इति क्षत्रियवर्गः । ८ ।

ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।
आजीवो जीविका वार्त्ता वृत्तिर्वेतन( वर्त )नजीवने ॥ १ ॥
स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम् ॥ २ ॥
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ।
सत्यानृतं वणिग्भावः स्यादृणं पर्युदञ्चनम् ॥ ३ ॥

---

जयाख्यस्य वयो शवे सभवात् । शवति यात्यस्माज्जीव शव । प्रगृह्यते बध्यते प्रग्रह । वन्द्यते याच्यते वन्दी हठहृता स्त्री, बलवतो हस्तक्षिप्तो राजपुत्रादिश्च, यदाहु – वन्दी स्यात्पणबन्धस्थ । कार्यते क्षिप्यतेऽस्या कारा, भिदाद्यङ् ( षिद्भिदादिभ्योऽङ् )॥ १२० ॥ अस्यन्तेऽसव , स्वभावाद्बहुत्वे पुलिङ्ग । प्राणन्त्यमाभि प्राणा , एवं शब्दस्तु पुंसि भूम्नि । प्राणो नाम वायुरित्येकत्वमजावादित्वात् । जीवन जीव प्राणधारणम् । जीवादि । आयत्य युर्जीवितावधि , उसन्त. क्लीबे, छन्दस्युदन्तोऽपि । जीवत्यनेन जीवातु , जीवनायौषध जीवनरक्षोपाय , यथा– जावातवे विसृज शङ्खमुनौ कृपाणम् ( उ० ), जीवितमौषध चेत्युपाध्याय ॥ १२१ ॥ इति क्षत्रियवर्ग । ८ ।

१ ऊर्वोर्भवा ऊरव्या , शरीरावयवाच्चेति ( सू० ) यत्, यच्छ्रुति – ऊरु तदस्य यद्वैश्य । अरणीयेर्य., अर्य स्वामिवैश्ययो ( सू० ) इति साधु । विशोऽपत्य जातिर्वैश्य , गर्गादिभ्योयञ् (सू०) । भूमिं स्पृशति कृष्यादिना भूमिस्पृक् । विशतीति विट् । ( आजीव ) आजीवन्त्यनेनेति करणे भावे वा साध्य । जीवन जीविका, रागादयाया ( सू० ) इत्यत्र धातुमत्वाद् भावे ण्वुल् वक्तव्य ( धात्वर्थनिर्देशेण्वुल् ) । कृष्यादिस्तूपचारात् । वर्तन वृत्तिरस्त्यस्या वार्त्ता, प्रज्ञाश्रद्धार्चावृत्तिभ्योण ( सू० ) । वर्तन्तेनया वृत्ति । वेति रादत्यनन वेतनम् ॥ १ ॥ कर्षण कृषि , इक्कृष्यादिभ्य ( वा० ) । पशुपालस्य कर्म पाशुपाल्यम् । वणिज कर्म वाणिज्यम्, ब्राह्मणादित्वात्ष्यञ् ( गुणवचनब्राह्मणादिभ्य कर्मणि च ) । दूतवणिग्भ्यां चेति वक्तव्यात् ( व० ) वाणिज्यापि । चात्कुसीदम् । ऋतामृताभ्या जावेत्तु मृतेन प्रमृतेन वा । सत्यानृताभ्यामपि वा न श्ववृत्त्या कथचनेति ये षड्वृत्तिभेदास्तानाह । ( सेवा ) शुन इव वृत्ति परपिण्डोपजीवितत्वादधमत्वर्थं । न ऋतमनृत पापिष्ठत्वात्, प्रमृतमिति तु सभ्य पाठ । उञ्छो धान्यकणोच्चयं – शिल धान्यमञ्जरी, समस्त व्यस्त विपर्यस्त वैतत्, वन्द्यत्वादृत सत्यम् ॥ २ ॥ मृत निर्जीवमिव । अमृतमनश्वरम् । किंचित्तस्य किंचिन्चासत्य, अत्र मनु – ऋतमुञ्छशिल ज्ञेय स्यादयाचितममृतम् । मृत तु याचित भैक्ष्य प्रमृत कर्षण स्मृतम् ॥ सत्यानृत तु वाणिज्य तेनापि खलु जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्ता परिवर्जयेत् ॥ अर्यत स्म ऋण, ऋणमधमर्ण्ये इति ( सू० ) साधु । ( पर्युदञ्चन ) परित उदञ्चनमुत्तमर्णमुद्धारत्वेन ग्रहणम् ॥ ३ ॥ अर्थस्य प्रयोग कलान्तरेण दानम् । कुत्सित सीदन्त्यत्र कुसीदम् । ( याचितक ) अपमित्ययाचिताभ्या कक्नौ ( सू० ) । विनिमयाद् भाण्डपरिवर्तनादागतमापमित्यक, मेङ् प्रणिदाने, उदीचामाङोऽयनीहारे ( सू० ), मयतेरिदन्यतरस्या ( सू० )

उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।
याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ४ ॥
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
कुसीदिको वार्धुषिको वृध्याजीवश्च वार्धुषिः ॥ ५ ॥
क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ।
क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् ।
तिल्यतैलीनवन्माषोमाणुभङ्गाद् द्विरूपता ॥ ७ ॥
मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।
बीजाकृतं तूप्तकृष्टे सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।
द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ।
खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥

---

इति ल्यप्- तुक्, तत आगतेऽर्थे, अपमित्ययाचिताभ्यां कक्कनौ ( सू० )। मुनिस्तु- निमयः परिवर्तः स्यादुद्धारोऽप्यापमित्यकः ॥ ४ ॥ उत्तम ऋणं उत्तमर्णः प्रयोक्ता, अधम ऋणं- अधमर्णो ग्राहकः, सुप्सुपेति ( सू० ) समासः। कुसीदं गृह्णाति कुसीदिकः, कुसीददशैकादशात्ष्ठन्ष्ठचौ ( सू० )। वृद्धिं गर्ह्यां प्रयच्छति वार्धुषिकः, प्रयच्छतिगर्ह्यमिति ( सू० ) ठक्, वृद्धेर्वृधुषिभावः ( वा० )। ( वार्धुषिः ) लक्ष्यादिसन्तोपि, यन्मनुः- श्रोत्रियस्य कदर्यस्य वदान्यस्यापि वार्धुषेः। वृद्धिमाजीवति वृध्याजीवः। द्वैगुणिकस्य। वृद्धिर्लाभः कलान्तरम् ॥ ५ ॥ कर्षति कृषिकः, औणादिक इकः ( कृषिकृष्यो किकन् )। कार्षकोपि। कृषिरस्त्यस्य कृषीवलः, रजःकृष्यासुतीति ( सू० ) वलच्, वले ( सू० ) इति दीर्घः। व्रीहीणां भवनं क्षेत्रं व्रैहेयं, व्रीहिशाल्योर्ढक् ( सू० ) ॥६॥ यवानां भवनं क्षेत्रं यव्यं, यवयवकषष्टिकाद्यत् ( सू० )। यवकोऽल्पयवः। षष्टिकाः षष्टिरात्रेण पच्यन्ते। उपाध्यायो यवादिभवने हितमिति पाठं परिकल्प्य प्रस्तावात्- क्षेत्रमित्यशुद्धं पठति। तिलानां भवनं क्षेत्रं, विभाषा तिलमाषोमाभङ्गाणुभ्यः ( सू० ) इति यत्खञौ। एवं माषादीनां द्विरूपता- माष्यं माषीणं, उम्यमौमीनं ( उमा-अतसी ), अणव्यमाणवीनं, भङ्ग्यं भाङ्गीनम् ॥ ७ ॥ मुद्गानां कोद्रवाणां च भवनं क्षेत्रं, धान्यानां भवने क्षेत्रे खञ् ( सू० )। आदिशब्दान्माषूर्णादि। शेषाणि व्रीह्यादिभ्योऽन्यानि। शाकक्षेत्रे तु- शाकशाकटं शाकशाकिनं, भवने क्षेत्रे शाकटशाकिनौ वक्तव्यौ ( वा० )। अबीजं सबीजं संपन्नं बीजाकृतं, कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ( सू० ) इति डाच्। आदौ उप्तं पश्चात् कृष्टं ( उप्तकृष्टं ), पूर्वकालैकेति ( सू० ) समासः। सीतया हलरेखया समितं संगतं सीत्यं, नौवयोधर्मेति ( सू० ) यातथा समिते यत्। हलेन कृष्टं हल्यं, मतजन-हलात्करणजल्पकर्षेषु ( सू० ) इति यत् ॥ ८ ॥ त्रिगुणं कृष्टं क्षेत्रं त्रिगुणाकृतं, संख्यायाश्च गुणान्तायाः ( सू० ) इति डाच्। त्रिहल्यं त्रिसीत्यमपि प्रागवत्, रपसीताहलेभ्यो यद्विधौ तदन्तविधिः ( ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषेधः ( ) )। सर्वं पूर्वं डाच्- यथा, द्वितीयाकृतं द्विहल्यं द्विसीत्यम्। शम्बकृतं हि सम्बन्धं कृष्ट्वा तिर्यक् कृष्टमाहुः ॥ ९ ॥ द्रोणस्य वापः क्षेत्रं द्रौणिकं, उप्यतेऽस्मिन्वापः, तदस्मिन्वापः इति ( सू० ) ठञ्। आदि-शब्दात्प्रस्थादिभ्यः, संभवत्यवहरतिपचतीति ( सू० ) इति प्रास्थिकादयः। ( खारीकः ) खार्याः ईकन् ( सू० )। पारकाजिह्वाजिनाक्षेत्रम् ॥ १० ॥ उप्यतेऽस्मिन्वपम्। केदारे जलैर्दार्यते केदारः। धान्यैः

सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ।
स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः ॥ १८ ॥
द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ।
क्षवः क्षुताभिजननो राजिका कृष्णिकासुरी ॥ १९ ॥
स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा ।
मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान् ॥ २० ॥
किंशारुः सस्यशूकं स्यात्कणिशं सस्यमञ्जरी ।
धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः ॥ २१ ॥
नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः ।
कडङ्गरो बुसं क्लीबे धान्यत्वचि पुमांस्तुषः ॥ २२ ॥
शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिम्बा त्रिषूत्तरे ।
रिद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥ २३ ॥
माषादयः शमीधान्ये शूकधान्ये यवादयः ।
शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥

---

थ्यते हरिमन्थः ॥ १८ ॥ तिलपिञ्जतिलपेजौ वक्तव्यौ ( वा० ) । वन्यतिलः स्वयङ्गतिलः । क्षीयन्ते न क्षवः । क्षुतमभिजनयति क्षुताभिजननः । कृष्णवर्णोऽयं राजसर्षपादयः । राजते राजिका । कृष्णा वर्णेन, कर्षति विलिखति वा । असुरी— असुरं, असुरस्य च वा ॥ १९ ॥ कुत्सितं कुत्साद्यर्थे कङ्गुः, कङ्गुः कङ्गुधान्यके । प्रीणाति प्रियङ्गुः । न तस्यने— अतसी । अवने— उमा, उङ् शब्दे । क्षौमवस्त्र कृत्या क्षुमा । न तोल्यते मातुलानी । भज्यते भङ्गा । शणोऽपि । अणुत्वेऽल्पत्वात्, अणति शब्देनेति वा । तुवरी लोके वरी निगद्यते श्यामाकः श्यामके च ॥ २० ॥ कुत्सितं शृणाति किंशारुः । शस्यते उम् । कणः सस्यस्य कणिशम् । धान्यराशिः शिलः, शिलं च । धन्यतेऽर्थ्यते धान्यम् । स्तम्बं करोति स्तम्बकरिः, स्तम्बशकृतोरिन् ( सू० ) । व्रीहि क्षां ]यं च । कुसूलो वल्लजः कोष्ठागारं धान्यादिकोष्ठकः । तृणादेः स्तम्बो नालं, स गुच्छ्यतेऽनेनेति गुच्छः । यं प्रति स्तम्बोऽभिहितम् तत्तन्यया विच्छुरणौ धार्यौ । एवं सर्वमेतत् ॥ २१ ॥ अस्य गुच्छस्य यः काण्डः— काण्ड( य )स्यतेन— सा नाडी, नड( नां )ति । ( नालं ) नल गन्धे । स काण्डः पलालः, पलतीति । कडङ्गरो इति, कड्( ड् ) मदूगं रूपस्य कडङ्गरः । बुस्यते— उत्सृज्यते बुसं तृणादिकोदः । तुष्यतेऽनेनाग्निस्तुषः ॥ २२ ॥ शूयति शूकम्, श्लक्ष्णं च तीक्ष्णाग्रं च तत् । सस्य देवकस्य तु नियतादिकतत्कोऽपि शूक इति किंशारुस्त्यत्र निर्देशः, शूकधान्यसमीधान्यभेदार्थं वा पुनरुक्तः । शाम्यत्यया मत्स्यं शमी । शिम्यति शिम्बा । शामः शिम्बिशिम्बि । शिम्बान्यत्वागे वाच्यलिङ्गाः । ऋद्धं समृद्धं गर्भः, ऋद्ध मयस्तन्यङ्के ऋद्धः । आवसितं रक्षणार्थमाच्छादितं, षम आच्छादनं, क्त— अवसितं निश्चय निश्चेके । पूयते स्म पूतं निर्बुसीकृतम् । बहु क्रियते बहुलं मार्जितं, तत्क्रियतः, मार्जनं शोधितनिस्पके ॥ २३ ॥ वर्तन्ते इति शेषः । ( माषादयः ) आदिशब्दान्मुद्गमसूरादयः । ( यवादयः ) आदिशब्दाद् गोधूमशालयः । शाल्यते शालिः । कल्यते कलमः । आदिशब्दात्तल्लशालीदया लल्कराः । षष्टिकाः षष्टिरात्रेण पच्यन्ते । आदिशब्दात्कोलायाः स्वलताः । अमी इति पुंलिङ्गनिर्देशात्शालयादयः शस्यन्ताः पुंसि ॥ २४ ॥ नियतैर्भिद्यन्ते नीवाराः, मुन्यन्नम्, नीवृधान्यं शमि ( सू० ) षम् । यद्धुवत्त गन्धत्वमतावाद्योऽपि । गो( वि )अन्यानि निर्धयते गवेधुकंस कुन्नमम् । अयोनिस्य— अयाद्यं, अयो निरिच्येके पेढुः । कुल्माषं कुत्सितेन सुषम् । ऊर्ध्वं स क्षाति ( उदूखलमुदखलं )

तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका ।
अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥ २५ ॥
प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् ।
स्यूतप्रसेवौ कण्डोलपिण्डौ कटकिलिञ्जकौ ॥ २६ ॥
समानौ रसवत्यां तु पाकस्थानमहानसे ।
पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवाः ॥ २७ ॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।
आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ २८ ॥
अश्मन्तमुद्धा( द्धा )नमधिश्रयणी चुल्लिरन्तिका ।
अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥
हसन्यप्यथ न स्त्री स्यादङ्गारोलातमुल्मुकम् ।
क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥ ३० ॥
अलं( लि )जरः स्यान्मणिकः कर्कर्यालूर्गलन्तिका ।
पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयो ॥ ३१ ॥

---

उदूखलोल्वणवत् पृषोदरादित्वात् ( सू० ) उभयम् ॥ २५ ॥ प्रस्फोट्यतेऽसारं बहिः क्रियतेऽनेन प्रस्फोटनम् । शायते शीर्यते वानेन शूर्पं, शूर्प माने वा । चाल्यतेऽनेनेति चालनं, कात्य.- क्षुद्रच्छिद्रसमोपेतं चालनं तितउ स्मृतः । तनोति सार तितउः, तनोतेर्डउ सन्वच्च ( उ० ) । परिपवन च । समानावित्येत । सीव्यते स्म स्यूत , वस्त्राद्यावपन च । प्रसीव्यते प्रसेवक । कण्ड्यते कण्डोल । पिण्ड्यते पिण्ड, वंशदलादिमयं भाण्डम् । पिटकोपि । कटत्यावृणोति कट. । क्लिश्यते क्षिप्यतस्मिन् किलिञ्ज ,वीरणतृणादिमय कुणालाख्यम् ॥ २६ ॥ रस आस्वादोऽस्त्यस्या रसवती । महदनोऽस्य महानसं, अनसा पक्करण लक्ष्यते, अनोऽश्माय सरसामिति ( सू० ) समासान्तष्टच् । पुरो गौर्मांस जल वास्याः पुरोगुस्तस्या रसवत्या अयं पौरोगवः । सूप कुर्वन्तीत्युपलक्षण मात्र क दे । ( वल्ल )वलि. सौत्र. प्रीत्यर्थं ॥ २७ ॥ ( आरालिकाः, इ० ) आरालमन्ध ओदन च पण्यमेषाम् । सूदयन्ति तण्डुलान्सूदाः । गुणयन्ति गुणा । भक्ष्यकाराश्च । अपूपाः कन्दुश्च पण्यमस्य, इसुसुक्तान्तात् ( सू० ) क, कान्दुक इति न्याय्यम् । खरविशदमभ्यवहार्यं भक्ष्यम् । पौरोगवाद्या वाच्यलिङ्गाः ॥ २८ ॥ अश्मनं तमन्तम् । उद्ध(ध)यते( ति )उद्धा (ध्मा)नम् । अधिश्रीयतेऽनयाधिश्रयणी, श्रै पाके । चुल्ल भावकरणेऽस्मच्चुदेरी चुल्लि । अन्तोऽस्त्यस्यामन्तिका, अन्तयति भिश्रयणी भवेदिति माला । अङ्गारा धीयन्तेऽस्यामङ्गारधानी समानि । हसन्त्यङ्गारैर्हसनी ॥ २९ ॥ अङ्गनमङ्गारः, लिङ्गार्य गिधि. । अलन्ति वारयन्त्यनद्वाते न लान्ति वा ( अलातम् ) । उल्का मुख स्युन्मुल्मर्धदग्ध काष्ठं, उलति वा, उलि. सौत्र. । अम्बते ध्वयतेऽम्बरीषम् । भृज्ज्यतेऽत्र भ्राष्ट्रम् । वेयो क्लिद्यते कन्दुर्ना पुमान्, भ्राष्ट्रो धा, कन्दत्यनया कन्दुः । स्वेदयति स्वेदनी ॥ ३० ॥ अल जीर्यत्यलञ्जरो महाकुम्भः । मणच्यस्मा श्रियमणो मणिक. । किरत्यम्बु कर्करी । आलात्यालूः, अट उपमेहस्मादा दृपूर्वा । गलत्यम्भोऽस्या गलन्तिका, वर्धनी त्वयं । पि( पे )ठति पिठरः पिठरी च, पिठ अवयवे । तिष्ठत्यस्यां स्थाली । स्थाली कुम्भी च । ओगरा उखा । कुण्ड्यते पच्यतेऽस्मिन्कुण्ड कुण्डी च । क लाति कलशी वा कलशः ॥ ३१ ॥ घटते घट: । कुटति यो वक्रगा वा कुट । निरिणन्तस्माद्भिन्नः । शीर्यमाणमर्पतिं धाराव । कर्षते मृत्पिण्डाद्रूध्यते छिद्यते वा चक्रादूर्ध्वमानस । कालञ्जिरोपि । अर्यते पार्श्वेऽस्याः दूर्वेकं, अम्भमिति तान्त्रिकाः, कनिभृजी मर्जने । पिष्टाज्जं भक्ष्य पच्यतेऽस्मिन् पिष्टपचनम् । काम्यतेऽस्मात्कंस.।

आरनालकसौवीरकुल्माषाभिषुतानि तु ।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्चि( ञ्जि )के ॥३९॥
सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् ।
तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥
निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।
सामुद्रं यत्तु लवणमक्षीवं वशि सि )रं च तत् ॥ ४१ ॥
सैन्धवोऽस्त्री शीतशिवं माणिबन्धं च सिन्धुजे ।
रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम् ॥ ४२ ॥
सौवर्चलेऽक्षरुचकं तिलकं तत्र मेचके ।
मत्स्यण्डी फाणितं खण्डविकारे शर्करा सिता ॥ ४३ ॥

---

भवं सौवीरम् । ( अभिषुत ) षुञ् अभिषवे, अस्माद्वा पृथक् कुल्माषाख्या नास्ति, चेद् भीमवत् स्यात् । कुल्माषैर्यवादिभिरभिषुतः परिवास्यते स्म कुल्माषाभिषुतम् । अवन्तिषु सूयते– अवन्तिसोमम् । कुञ्जं लाति कुत्सितं जलमस्य वा कुञ्जलम् । कञ्ज( ञ्च )यति दीपयत्यग्निं बध्नाति दोषान्वा काञ्चिकं, काञ्ज्या पूरि भवं वा । आह च ( धन्वन्तरिः )– काञ्चिकं कञ्जिकं वीरं कुल्माषाभिषुतं तथा । अवन्तिसोमं धान्याम्लमारनालं महारसम् ॥ सौवीरकं सुवीराम्लं तथा शुक्तं तुषोदकम् ॥३९॥ सहस्रं बहु विध्यति सहस्रवेधि । जायते जतुकम् । बाह्लीकरामठवुरदशौ । हिनोति हिङ्गु । अयुग्मं भूतनाशनमगूढगन्धं च । तस्य हिङ्गोः पत्री, करोतीयं कारवी सरस्वती । बाष्पं स्रवति बाष्पिका । कबर्या-कृतिः कबरी, करबरीति च पाठभेदः ॥ ४० ॥ निशाख्या रात्रिपर्याया नानार्थे रजनीत्वात् । काञ्चनवर्णा काञ्चनी । हरि पीतं वर्णं द्रति ( गच्छति ) हरिद्रा । वरो वर्णोऽस्याः वरवर्णिनी । आह च– हरिद्रा पीतिका पिङ्गा र( र )जनी रजनी[ काञ्चनी ] निशा । गौरी वर्णवती पीता हरिता वरवर्णिनी । लुनाति जाड्यं लवणं, नन्द्यादित्वाल्ल्युः (सू०), णत्वं च । अक्ष्णोति व्याप्नोति– अक्षीवम् । उच्यते वशिरं, वश कान्तौ ॥ ४१ ॥ सिन्धुनद्युपलक्षिते देशे भवं सैन्धवम् । शीतं शिनोति शीतशिवं, उष्णवीर्यत्वात् । मणिबन्ध-गिरौ भवं माणिबन्धम् । मणिमन्थं( न्थ ) माणिमन्थं चाहुः । आह च– सैन्धवं स्याद्धु सिन्धूत्थं नादेयी( य ) सिन्धुजं शिवम् । शुद्धं शीताशिवं चान्यन्माणिबन्धं शिवान्तकम् ॥ रुमायामाकरे भवं रौमकम् । वसुगन्धि वसुकं नाम लवणं, रौमके वसुकं वदन्तीति माला । पाके भवं पाक्यं पक्तव्यं वा यवक्षारा-रूयम् । बिलति भिनत्ति मलं बिडम् । कृतकस्य लवणस्य द्वे नामनी । पाक्यबिडलवणयोर्भेदेऽपि कृतकत्वा-दैक्यम् । स्यर्थे पाक्यं बिडलवणं यवक्षारः काचश्चेति ॥ ४२ ॥ सुवर्चलाख्ये भवं सौवर्चलं, सुवर्चस्ये-दमग्निदीपनं लाति वा, वर्च दीप्तौ, अच् । अक्ष्णोति व्याप्नोत्यक्षम् । रोचनेनेन रुचकम् । हृद्यगन्धं च । तिलति स्निह्यति तिलकम् । तत्र तस्मिन्नेव मेचके कृष्णे लवणे वर्तते, पूर्वं तु मधु( र )लवणम् । अगन्धं कृष्णलवणं तिलकमित्येके, यद्वैद्याः– कृष्णे सौवर्चलगुणा लवणे गन्धवर्जितं । मद स्यन्दते मत्स्यण्डी सामान्यशर्करा, मत्स्यानमति रुजति मत्स्य( स्या )ण्डीति वैद्याः, यद्धन्वन्तरिः– शर्करोक्ता तु मीनाण्डी श्वेता मत्स्याण्डिका सिता । मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तराः इति तु वाह( भ )टः । फाण्यते द्रवत्वत्यागेन खण्ड्यते । क्षौद्रक इक्षुरसविकारः खण्डवत् । शीर्यते शर्करा । साय्यते सिता खण्डशर्कराख्या ॥४३॥ कूर्चं तन्(क)मस्तु तदस्त्यस्याः कूर्चिका, कुचाने कूर्चिका कुचीक्यके किला टिकाभ्याः । रसमलति रसाला । मर्ज्यते मार्जिता दधिसितामरीचादिकृत लेह्य, यत्सूदशास्त्रम्– अर्धा-

मिस्सटा वधिका सर्वरसाग्रे मण्डमस्त्रियाम् ।
मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥
यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
गव्यं त्रिषु गवां सर्वं गोविड् गोमयमस्त्रियाम् ॥ ५० ॥
तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् ।
पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् ।
तत्तु हैयंगवीनं यद् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ।
दण्डाहतं कालशेयमरिष्टमपि गोरसः ।
तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥
मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः ।
अशनाया बुभुक्षा क्षुद् ग्रासस्तु कवलः पुमान् ॥ ५४ ॥

---

निस्रावः ॥ ४९ ॥ यूयते पिष्टादिना यवागूः, सयुवचिम्यइस्यागूच् ( उ० ) । संज्ञितोष्ण - उष्णिका, ब्राह्मणकोष्णिकेसंज्ञायाम् ( सू० ) । श्रायते श्राणा, श्रा पाके । विलिम्पति विलेपी । तरला लेह्यत्वाच-पला । मदूषणाभ्यञ्जने तैल कृश[ स ]रस्तु तिलौदन. । गोरिद गवे भवमित्यादिष्वर्थेषु गव्यं क्षीरादि, सर्वत्रगोरजादिप्रसङ्गेयत् ( वा० ) । गोर्विट् गाविट् गोमय च गोश्चपुरीषे ( सू० ) मयट् ॥ ५० ॥ करोत्यग्निं करीषं शुष्कगोमयम् । दुह्यते दुग्धम् । घस्यते( अद्यते ) क्षीरम्, घसेः किच्च ( उ० ) ईरन्, गमहनजनेति ( सू० ) उपधालोप, खरि च ( सू० ) इति चर्त्वम्, शासिवसिघसीनाच ( सू० ) षत्वम्। पीयते पयते वा रसत्वात्पय , असुन् । सममिति पयसो नपुंसकत्वार्थम् । पयसो विकार पयस्य, गोपय-सोर्यत् ( सू० ) । आदिशब्दान्नवनीतादि । दृप्यति ( अनेन ) द्रप्सम् । घनादन्यदघनमित्यर्थः, यन्माला द्रप्सं दध्यघन तथा । एतच्च द्रप्स शरानिति भागुरिपाठे सरमिति बुद्ध्वा मालाकारो भ्रान्त । केचित्तु नाशिना इत्ययमपि मालापाठेन विरुद्ध्य , यदाह दुर्गः- वाणद्रप्सौ शराविति । इत्य तु समर्थं, तरत्- उपरि प्लवमान घन दधि द्रप्सम् ॥ ५१ ॥ जिघर्ति घृतम् । आ- अञ्जनीयमाज्य, आङ्-पूर्वादञ्जे संज्ञायाक्यप् ( वा० ) । हूयते हवि , हविष्य च । सर्पति सर्पि , इसन्नौ । दध्नो मथितान्नवं तत्काल नीतमुद्धृतं नवनीत घृतयोनि । ह्योगोदोहस्य विकारो हैयङ्गवीन, हैयङ्गवीनसंज्ञाया ( सू० ) इति साधु । कात्यो नवनीतमेवाह ॥ ५२ ॥ मन्थदण्डेनाहतं दण्डाहतम् । कलश्या गर्गर्यां भव कालशेयम् । न रिष्यति हिनस्ति- अरिष्ट, सर्वरोगजित्त्वात् । नञ्पूर्वो रिष नाद्य । तद्यान द्रुत गच्छति तक्र चतुर्भागाम्बु । उदकेन श्वयति- उदश्वित्तदर्धाम्बु । दध्नो मन्थनमात्रतोऽम्थ मथित निर्जलम् । द्विगुणाम्बु श्वेतरस्ममोदकमुदश्वितम् । तक्र त्रिभागभेनाम्बु केवल मथितं स्मृतमिति धन्वन्तरि ॥ ५३ ॥ दध्नो मण्ड द्रवो भाग , मस्यति परिणमते मस्तु । पीयते पीयूष , नवप्रसूतगवाक्षीर क्वथित सत् । अशनेच्छा- अशनाया, अशनायोदन्येति ( सू० ) साधु । भोक्तुमिच्छा बुभुक्षा । क्षुत्, क्षुध बुभुक्षायाम् । रोचके स्त्री रुचिश्च । ग्रस्यते ग्रास । के तालुनि वलते कवल ॥ ५४ ॥ सहपान सपीति । महादन सग्धि , क्तिन्, बहुलछन्दसि ( सू० ) इति घस्लृ, घसिभसोर्हलिच ( सू० ) इत्युपधालोप , झलोझलि ( सू० ) इति सलोप, झषस्तथोर्धोऽध ( सू० ), झलाजशूझशि ( सू० ) । उदकेच्छा उदन्या, अशनायोदन्येति ( सू० ) साधु । तर्षण तृट् तर्षश्च, ञितृष पिपासायाम् । तृष्णा नानार्थे । अदन जग्धि. अदोज-

सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ।
उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम् ॥ ५५ ॥
जेमनं लेह आहारो निघसो न्याद इत्यपि ।
सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥
गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे ।
गोमान्गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ५८ ॥
त्रिष्वाशितंगवीनं तद् गावो यत्राशिताः पुरा ।
उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥५९॥
अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् ।
गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥
वृषो( उक्षा )महान्महोक्षः स्याद् वृद्धोक्षस्तु जरद्गवः ।
उत्पन्न उक्षा जातोक्षः सद्योजातस्तु तर्णकः । ६१ ॥

पिपासेति ( सू० ) ॥ ५५ ॥ जमेर्जेमनमाहुः, जमनं जवनं वा, यद् दुर्गः– जवनं भोजनं केचित् । न्यदन निघसः, नौ गद ( सू० ) इत्यप्, घञर्थे क ( सू० ) इति घस्लादेशः । ने ( नौ गद ) न्यादः । प्रत्यवसानमभ्यवहारश्च । सुहितस्य भावः सौहित्यम् । फलति विशीर्यते फेला, फेल्ल चलने-त्यस्मात् ॥५६॥ काम्यते कामम् । पर्याप्तिः पर्याप्तम् । इष्यत इष्टम् । ईप्सितमनतिक्रम्य यथेप्सितम् । प्रथमः क्रियाविशेषणान्येतानि क्त एवाव्ययं वे- एतेषा स्त्रीभेदो भ्रान्तः, यच्छाश्वतः–कामे निकामे कमा-र्थयां । गाः पाति गोपः । गाः सङ्ख्याति गोसंख्यः । गा दोग्धि गोधुक् । आ–अभित ईरयति–आभीरः । दोग्ध्यादि गा वल्लवः, वल्लिः सौत्रो वा ॥ ५७ ॥ पादे बन्धनमस्य पादबन्धनम् । आदिशब्दात्स्वरादि । यादवं धनमित्येके केचुः । गावः सन्त्यस्य गोमी, ज्योत्स्नादिभ्य इति ( सू० ) साधुः । व्रजन्त्यस्मिन्निति व्रजः– गोसम्बन्धी समूहः, गोचरसंचरेति ( सू० ) साधुः । धन च ॥ ५८ ॥ आशिता भोजिता गावो यत्राशितं-गवीनं, अषडक्षाशितङ्ग्वितेति ( सू० ) स्वार्थे खः । आशितंगवीनमिति प्राच्यानां भ्रमः यथाप्यस्य– गावो यत्राशिताः पुरेति ।, उक्षति– उक्षा । मन्दते भद्रः । बलेन्वृदते बलीवर्दः । ऋषति गच्छति ऋषभः, ॥ ५९ ॥ अनो वहत्यनड्वान्, अनसि वहेः क्विप्नसोड् च ( उ० ) । सुरभेरपत्यं सौरभेयः । गच्छति गौः । अवान्तरभेदोऽस्य न विवक्षितः । शाङ्करस्तु चक्रे शाङ्करेयः शाङ्करश्च । ( औक्षक ) गोत्रोक्षेष्ट्रेति ( सू० ) वुञ् । संहतिरित्येव । ( गव्या, गोत्रा ) खलगोरथादिति ( सू० ) यः, इनित्रकट्यचश्चेति ( सू० ) त्रः । वत्सानां समूहो वात्सकं, गोत्रोक्षोष्ट्रेति ( सू० ) वुञ् । धेनूनां समूहो धैनुकम्, अचित्तहस्तिधेनोष्ठक् ( सू० ) ॥ ६० ॥ महांश्चासावुक्षा च महोक्षः, अचतुरविचतुरेति ( सू० ) साधु । एवं वृद्धोक्षजातोक्षौ । माला च – महोक्षः स्याद्वृहत्तरे स्थाणुवः स्कन्धदाहकः । दीर्घनपदहनो नरः क्रो मानविषाणकः ॥ जरच्चासौ गौश्च जरद्गवः, गोरतद्धितलुकि ( सू० ) इति टच् । तृणोपाति केवलं तर्णकः ॥ ६१ ॥ शकृत्करोति शकृत्करिः, स्तम्बशकृतोरिन् ( सू० ), व्रीहिवत्सयोरुपसंख्यानात् ( वा० ) । वसति वत्सः । दम्यते दम्यः । वत्सत्वं तनुत्वमस्य वत्सतरः, वत्सोक्षाश्वर्षभेभ्यश्च ( सू० ) इति ष्टरच्, तनुत्वं द्वितीयवयः-प्राप्तिः । ( आर्षभ्यः ) आण्डकर्षणयोग्यः, षण्डनेत्येके, अत एव ऋषभस्य प्रतिकृतिरार्षभ्यः, ऋषभोपल-

शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ ।
आर्षभ्यः षण्ढतायोग्यः षण्डो गोपतिरिट्चरः ॥ ६२ ॥
स्कन्धप्रदेशस्तु वहः सास्ना तु गलकम्बलः ।
स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥
युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः ।
खनति तेन तद्वोढास्येदं हालिकसैरिकौ ॥ ६४ ॥
धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः ।
उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु सर्वधुरीणो यो भवेत्सर्वधुरावहः ।
माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६ ॥
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी ।
वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ६७ ॥
द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ।
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥

---

होर्म्यं ( सू० )। मन्यत उत्सृज्यत प० । एणमिट् इगा चरति- इत्वर स्वेच्छचारी, इत्वर इत्येके पठु ॥ ६२ ॥ वहत्यनेनेति वहः गोचरेत्यादि ( सू० ) साधु । सस्ते इवतीव स्यापितमा पत्वात् सीयते वा सास्न, गम स्पन्द पे तकर्मणि । नमाशा नस्त नस्तनामिकायायस क्षुद्रविणी ( वा० ) नप् । नस्त किशते स्म नस्तित, प्रातरादिकद्वा रर्थे इति ( ग० ) गिज न शिष्टा, नासायां कृताच्छिद्रो गौ रित्यर्थः । नासिकायां भव नस्य नासकृते रन्ध्र रज्वादिना- त उत उत्मितो नस्योत । पञ्चम षष्ठ वा वर्षे वहति पत्राह् यथा गौ वह्य ( सू ) इति गि । युगस्य स्कन्धकाष्ठस्य पार्श्वे गच्छति युगपार्श्वगो हलादेश्चर्यः । दमनाय योजित इत्यर्थः लभगत्वेवक्षगन ते मन्थकृता वहलिदाया नका ॥ ६३ ॥ ( युग्य इ० ) युग प्रासङ्ग शकट च वहति तद्वहतिरथयुगप्रासङ्गम्-( सू० ) इति यत् शकटादण् ( सू० ) । ( हालिक इ० ) हलेन खनति तनदेशनेखनीति ( सू० ) ठक् । हल व इति हलस्यद वेति, हलसीराट्ठक् ( सू० ) ॥ ४ ॥ ( धुर इ० ) धुरं वहति धुरो यड्ढकौ ( सू० ) ख सर्वधुरा दिति ( सू० ) गोगतिम गास्त । धुरं धरति धरधर, कच नहा सखर ( मञ्ज । मुकुपूर्ता ति ), धूर्धरान्य था स्यात् । ( एकधुरीण इ० ) एकधुराल्लुक्च ( सू० ) इति सा लुक्च लुकाक्षे ऋक्पूरब्धूरिति ( सू० ) अ समासान्त ॥ ६५ ॥ ( सर्वधुरीण ) सर्वधुरात् ( सू० ) । मयो पुत्र्यत मह्या तस्या अपत्य माहेयी । वसति शरमस्यामुस्र । पृ गेम्य दय सामान्यापि विशये वर्तन्ते ॥ ६ ॥ अर्जुनीति शुक्लगवी । न हन्यघ्न्या अध्न्यादयश्च ( उ० ) इति मन्थ । रोहिणी गवल । अत्वाहो गौरलङ्कृदी प्रशस्ता गौ नैचिकी । मुगभर्गानार्थे । नैचेनचे नैचिकी ठक अव्ययानां भमात्रे टिलोप वक्तव्य ( वा० ) । इनो गवाविका प्रायुक्त । गवनीति अ सा ङ्गी ( मू० ) । धवला अ गौरादसदृचनुरास्त्राभावाद् ङीप् नास्ति । आचादितमश्चरत मुण्ड या द्विविध ह्रस्वक हायन ॥ ६७ ॥ द्वौ हायनौ वय सत गनरश नाडीयस्य उत्त- अपत्रीति दे ( सू ) उत् हायनान्त्याच्च ( सू० ) इत्यत्र इयन्द्र वयोवाचन ( सू० ) इति डाप् । द्वे वर्षे यस्या द्विवर्ष ( गे ) टापश्च ( सू० ) विशतिभिर्य ( सू० ) मारिमातीति वेति ( सू० ) ङीप् नास्ति उलगस्त्री च न परिमाण नित । त्रिचतुर्भ्यो हायनस्य णत्वं ( वा० ) वयसि । ६८ । तो इनसर प० बत्ता । वरनाति

वशा वन्ध्यावतोका तु स्रवद्गर्भाथ सन्धिनी ।
आक्रान्ता वृषभेणाथ वेहद्गर्भोपघातिनी ॥ ६९ ॥
काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी ।
स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ॥ ७० ॥
चिरसूता बष्कयिणी धेनुः स्यान्नवसूतिका ।
सुव्रता सुखसंदोह्या पीनोघ्नी पीवरस्तनी ॥ ७१ ॥
द्रोणक्षीरा द्रोणदुग्धा धेनुष्या बन्धके स्थिता ।
समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥
ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ।
न पुंसि दाम संदानं पशुरज्जुस्तु दामनी ॥ ७३ ॥
वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।
कुठ( ट )रो दण्डविष्कम्भो मन्थनी गर्गरी समे ॥ ७४ ॥

---

प्रसूते वन्ध्या वननीया वा । अवघुन तोकमपत्यमस्या अवतोका, अव( त्र )स्रवन्ती च, मृतवत्सा स्रवद्गर्भेति माला । सन्धानं संधा गर्भस्तम्भनमस्त्यस्याः संधिनी, अदुग्धा दोहकाले तु संधिनीति कात्यः, सन्धि-कल्पद्रुः । गौर्वृषाक्रान्ता च संधिनीति शाश्वतः । विहन्ति गर्भं वेहत्, वेहत् प्रपतनेऽस्य ह्या, वेहद्गर्भोपघा-तेति भागुरिः ॥ ६९ ॥ प्रजने गर्भग्रहणं ( काल्या )प्राप्तकाल, वृषेणोपसर्तव्योपसर्या, उपसर्या काल्या प्रजने ( मू० ) इति साधुः । प्रष्ठं वहति प्रष्ठौही, वहश्च ( मू० ) इति णिः, वाहऊठ् ( मू० ) ऊठ्, वाहऊठ् ( मू० ). एत्येधत्यूठ्सु ( मू० ) इति वृद्धिः । प्रष्ठौहीं गर्भिणीति सर्वे, अभिनवा बालगर्भिणीति भागुरिः, परिकर्मा बालगर्भिणीति माला । अचण्डा- अकोपने यथं, वर्त्मादित्वात् ( मू० ) वा ङीष् । सुखेन क्रियते सुकरा, सुगमश्च त्यागम । परमिच्छति परेष्टुका । बहुप्रसूता गौः ॥ ७० ॥ बष्कयेनेति मतिः बष्कयश्चिरकालः, औणादिकत्वात् ( अनन् ), सोऽस्त्यस्याः ( बष्कयिणी ), बष्कयणीति सम्या । धयन्त्येनां धेनुः । ( सुव्रता ) सुशीलेत्यर्थः । पानमूधोऽस्याः पीनोघ्नी, ऊधसोऽनङ् ( मू० ), बहुव्रीहेरूधसो ङीष् ( मू० ) । पीवरस्तनी, स्वाङ्गाच्चोपसर्जनादिति ( मू० ) ङीष् ॥ ७१ ॥ द्रोणं दोग्धि द्रोणदुघा, दुहः कप् घश्च ( मू० ) । धेनुष्या ) संज्ञायां धेनुष्येति ( मू० ) साधुः, आ ऋणशुद्धेर्या बन्धके स्थापिता पीतदुग्धकन्या । ( समांसमीना ) समां समां विजायते ( मू० ) इति ख ॥ ७२ ॥ ऊनत्त्यूध । अप्यायते आपीनं, प्यायः पी ( मू० ), सं प्रसारणं ( वा० ), आङ्पूर्वं( आङ्पूर्वस्य )सूत्रे वैकल्प्यात् ( वा० ), ओदितश्च ( ओदितश्चेति ) निष्ठानत्वम् । हम्भा( म्भा )रावो गवां ध्वनिः । शिवं करोति, शिनोति वा शिवकः । कील्यते बध्यतेऽस्मिन्निति कीलकः । दीयते खण्ड्यतेऽनेनेति संदानं बन्धनरज्जुः । ( दामनी ) निर्दिष्टं छन्दसोः ( मू० ) इति ङीप् ॥ ७३ ॥ विशाखासु जातो वैशाख, विशाखाषाढादण्मन्थदण्डयोः ( मू० ), विशाखस्यायं वा । मथ्यतेऽनेन मन्थः, पुंसि संज्ञायां घः ( मू० ) । मथ्नाति मन्थान, मन्थानश्च । ( मन्थाः ) मथिन्- शब्दस्य- इतोऽत्सर्वनामस्थाने ( मू० ), थो न्थः ( मू० ) । मन्थनार्थो दण्डो मन्थदण्ड. । स्तम्भः कुठरोऽस्ति । कुठति कुठरः, कुटरो वा दण्डस्तम्भे वर्तते । दण्डं विष्क-म्भाति दण्डविष्कम्भ, दधिमन्थनदण्ड आरूढ्यते । कठोरोऽपि, दण्डकोऽपि कलिङ्गे । मन्थ-पात्रं मन्थनी । गिरति गर्गरी । कलशम ॥ ७४ ॥ दम्यते दमने मरी- बट । फलोन्मोकनि सङ्गे । मनस्वी- नवः. गवो गच्छति वा, गर्भेऽप्र ईयते । दान्तके दौर्-बल्ये जिता दरमधूमके । कशिरो रसत उरसारी कर्मं वत्सोढः । ( कुलुत्तम ) गुरु ।-

उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः ।
करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥
अजा छागी शुभ( स्तभ छागवस्तच्छगलका अजे ।
मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।
चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ॥ ७७ ॥
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥
विक्रेता स्याद्विक्रयिकः क्रायकः क्रयिकः समौ ।
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥
नीवी परिपणो मूलधनं लाभोऽधिकं फलम् ।
परिदानं परीवर्तो नैमयनिमयावपि ॥ ८० ॥

लमस्यबन्धनकरभइवि ( सू० ) कन् । विकारे नित्यवृद्धशरादिभ्य ( सू० ) इति मयटा दारुमयैरिति भवितु युक्तम् ॥ ७५ ॥ अजति गच्छति व्यय मर्श उत्वादजा, अज द्यष्टाप् ( सू० ) । छयति रोगं छागी, जातेरस्त्रीविषयादयोपधात् ( सू० ) इति ङीष् । स्त्रीविषयप्रत्ययार्थं पृथक्पाठ । शोभते शुभ, शु( तु )भो निघण्टुषु । वस्ते वस्त । छयति रोगाश्छाग , छगलश्च । छागोऽपि । मेहति मेढ्रः । उरु भाम्यति- उरभ्र , उच्चै रभते वा, उ स्वरप्रतिरूपको निपात । एवमुचे रणोस्येत्यु णः, उरण्यति देवत प्रीणातीति श्रीभोज कण्ड्वादिपाठ त् । ऊर्णा स्त्यस्ये णं यु , ऊर्णाय युस् ( सू० ) । मेषति वाशते मेष , पचाद्यच् ( नन्दिग्रहीति ) । वर्षति वृष्ण । आ- ईड्यन्ते देवा अनेन एडक । हुडुश्च । अविर्नान र्थे ॥ ७६ ॥ ( औष्ट्रक, इ० ) गोत्रोक्षोष्ट्रेरभ्रेतिवुञ् ( सू० ) । चक्रमस्त्यस्य तैलिकादिचक्रभ्रमणाच्च, आसन्दीवदष्ठीवच्चक्रीवदिति ( सू० ) मधु । चक्रवालस्तु वालेय इति माला । बालेभ्यो हितो यालेय , वाले वा[ च ]रने भवो वा । रासने रासभ , रास शब्दे । गर्दति गर्दभ, गर्द शब्दे । ख शब्द राति खर, खमस्त्यस्य वा, ( रप्रकरणे ) खमुखकुञ्जेभ्योर ( वा० ) । क्रूगेरि, शङ्कुकर्णोऽपि । षड्‌द्वित्रयो पशुभ्य. षड्गवमथ गोयुग च परं, यथा मेषषड्गव गोगेयु म्, पशुनामभ्यो द्वित्वे गोयुगच् ( वा० ), षट्त्वे षड्गवच् ( वा० ) । अविसोढमविमरीस तथाविदुस पयो मेष्य , अवेर्दुग्धे- सोढदूसमरीसचो वक्तव्या ( वा० ) ॥ ७७ ॥ विदेहे- उपचये भवो वैदेहक । सार्थान्सधनान्सरतो वा पान्थान्वहति सार्थवाह । निगमे- आपणे भवो नैगम । पणते वणिक् । वणिगेव वाणिज , प्रज्ञादित्वा त्स्वार्थेऽण् ( सू० ) । आपण प्रयोजनमस्यास्त्यापणिक । क्रयविक्रय भ्या जीवति क्रयविक्रयिक , वस्नक्रयविक्रयाट्ठन् ( सू० ) इति संघातविगृहीतात्ठन् ॥ ७८ ॥ विक्रीणीते भाण्डेन मूल्यं गृह्णाति विक्रेता । क्रीणाति मूल्येन भाण्डं क्रायक । क्रयेण जीवति क्रयिक । वणिजो भावो वाणिज्यं, ब्राह्मणादित्वात्ष्यञ् ( गुणवचनब्राह्मणादिभ्य कर्मणिच ) । ( वणिज्या ) दूतवणिग्भ्यांचेतिवक्तव्याद्यच्च ( वा० ) । मूले नानाम्य मूल्यं, नौवयोधर्मेति ( सू० ) यत् । वसत्यस्मिन्पण्यं वस्न । अवक्रीयतेऽनेनावक्रय ॥ ७९ ॥ नीविर परहस्तेऽर्प्यमाणत्वात् । परिपण्यते व्यवहर्तुं युज्यते परिपण । मूलं लाभकारणम् । मूलधनादाधिक्येन गम्यते स लाभ. फल च । कलान्तरादि । परिवर्तादान परिदानम् । निमये परिवर्तनीये भवो नैमेय. निमानं निमयः, मेङ् प्रणिदाने ॥ ८० ॥ उपमृत्य समीप निधीयते शुभं स्थाप्यते- उपनिधि, उ

प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ॥ २४६ ॥
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ।
यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ २४७ ॥
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।
वृथा निरर्थकाविध्योर्नानानेकोभयार्थयोः ॥ २४८ ॥
नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ।
प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ २४९ ॥

---

मन्युरर्जुनत [ नं ] प्रति । वीप्सायाम्– वृक्षं वृक्षं प्रति सिञ्चति । लक्षणे– वृक्षं प्रति विद्योतते विद्युत् । आदिशब्दादित्थंभूताख्यानादौ– साधुर्देवो मातरं प्रति । भागे– यदत्र मां प्रति स्यात्तद्दीयताम् । प्रतिदाने– माषानस्मै तिलेभ्यः प्रति प्रयच्छति । हेतौ– हन्तीति पलायते । प्रकरणे प्रकारः– गौरश्वो हस्तीति जातिः ( भाष्य० ) । प्रकर्षे– इति पाणिनिः, पाणिनिशब्दः प्रकर्षान्वित इत्यर्थः । अत एव प्रकारा( रा )दीनि पेठुः । आदिशब्दादेवमर्थे– कमादत्तं नारद इत्यबोधि सः ( शिशु० ) । मते– इत्यापिशलिः । विवक्षानियमे– तदस्यास्त्यस्मिन्निति मतुप् ( पाणिनिसूत्र ) । स्वरूपे– वृद्धिरित्ययं वा वृद्धिः । समाप्तौ यथा– इत्यर्थ इति । प्रत्यक्षे शंनिधावनवधारणे च ॥ २४६ ॥ प्राच्याम्– पुरस्तात्सूर्य उदेति । प्रथमे– पुरस्तात् मुकुन्दः । पुरार्थे पूर्ववृत्ते– पुरस्ताद्रामोऽभूत् । अग्रतोऽर्थे– पुरस्तात्सेनानीर्यातीति । आदिशब्दाग्नादिदेशे काले च– पुरस्ताद् द्वारम्, पुरस्तात्कृतम् । साकल्ये यथा– यावत्कार्यं तावत्कुरु, सकलं कुर्वित्यर्थः । अवधौ– यावद् गन्ता तावत्तिष्ठ । माने– यावद्दत्तं तावद् भुक्तम् । अवधारणे– यावदत्र ब्राह्मणानामन्त्रयस्व ॥ २४७ ॥ मङ्गले– अथ परस्मैपदानि । अनन्तरे– स्नात्वाथ भुङ्क्ते । आरम्भे– अथ शब्दानुशासनम् । प्रश्ने– अथ शक्तोऽसि भोक्तुम् । कार्त्स्न्ये– अथ कृत्स्नं ब्रूमः । अधिकारेऽपि– अथ स्नानविधिः । प्रतिज्ञायाम्– अथो होमतानयेति ब्रूमः । अन्वादेशेऽपि– अथो इमं वेदमध्यापय, अथो एनं छन्दांसि । समुच्चये द्वौ– अथो धनञ्जयः, भीमोऽथार्जुनः । निरर्थके– वृथा दुर्योधनस्तथा । अविधौ– अनिभाव्यं वृथा दानमाक्षिकं शौल्किकं च यत् ( मनु० ) । अनेकार्थे– नानाविधा जनाः । उभयार्थे– नानाश्चनरेः सहायः । विनार्थेऽपि– नाना नारीं निष्फला लोकयात्रा ॥ २४८ ॥ प्रश्ने– को नु धावति । विकल्पेऽपि– भीमो नु फाल्गुनो नु योद्धा । वितर्के– अहिर्नु रज्जुर्नु । पश्चादर्थे– तमनु धावति । सादृश्ये अनुकारः । लक्षणादौ च– वृक्षमनु द्योतते । तत्त्वाख्याने– साधुर्देवो मातरमनु । भागे– यदत्र मामनु स्यात्तद् दीयताम् । वीप्सायाम्– वृक्षं वृक्षमनु सिञ्चति । दैर्घ्ये– अनुगङ्गं वाराणसी । प्रश्ने– ननु ध्येयमुच्यते । अवधारणे– नन्वयं गच्छामः । अनुज्ञायाम्– नन्वादिश । अनुनयामन्त्रणे– ननु वदिह नयोद मे । वाक्यारम्भादौ च– नन्वयोक्तः सत्त्व( सू )यते । आक्षेपे– ननु किमर्थमागतोऽसि । प्रत्युक्तावर्थाः कर्तं चेत्, ननु करोमि भोः ॥ २४९ ॥ गर्हायाम्– अपि सिञ्चेत्पलाण्डुम् । समुच्चये– भीमं भजे नौमि । प्रश्ने– अपि याति । इष्टप्रश्नेऽपि– अपि क्रियार्थं सुलभं समित्कुशम् ( कु० सं० ) । शङ्कायाम्– अपि गच्छेत् । सम्भावनायाम्– पर्वतमपि शिरसा भिन्द्यात् । अपेक्षादौ च– अपि गृह्णीयां चे( वे )दम् । पदार्थे– सर्पिषोऽपि स्यात्, मात्रा स्तोकं वा । उपमायां आशीरादिषु वा संयुक्तः सूत्रे स्वप्रतिनिर्देशः । भीमेन्द्रादो वा समरे गदायाणि दृश्यते ॥ विकल्पे– पर्वतैर्हिमितो यजेत् । द्वे द्वे समुच्चयेऽत्र पद– वा वा हस्तोऽस्तु वा मूर्तिरस्त्वसौ मम ( कु० सं० ), न तुल्यार्थेयं, वायुरिव मेदरांस

गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।
उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ २५० ॥
अमा सह समीपे च कं वारिणि च मूर्ध्नि च ।
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ २५१ ॥
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ।
नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५२ ॥
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।
हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ॥ २५३ ॥
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ।
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ २५४ ॥
ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ।
स्वर्गे परे च लोके स्वर्वार्तासंभाव्ययोः किल ॥ २५५ ॥

---

दहनो वा । अर्धे- सामि समीलिताक्षी । जुगुप्सिते- सामि कृतमकृतं स्यात् ॥ २५० ॥ सहार्थे- पुत्रेणामा भुङ्क्ते । समीपे- अमा भवोमात्य । जले- कंजं पद्मम् । मूर्ध्नि- कंजा केशा । निन्दासुखयोश्च- कंदर्पः, कंयु । इवार्थे- अग्निरेवं विप्र । इत्थमर्थे- एवंवादिनि देवर्षौ ( कु० सं० ) । उपदेशादौ च- एवं पठ । निर्देशे- एव तावत् । निश्चये- एवमेतत् । अङ्गीकारे- एवं कुर्म । तर्के- नूनं शरत्फुल्ल दिकाशा । अर्थनिश्चये- नून हन्तास्मि रावणम् ॥ २५१ ॥ तूष्णीमर्थे- जोषमास्स्व । सुखे- जोषमास्ते जितेन्द्रिय । प्रश्ने- किं गतोस । जुगुप्सने- किंराजा यो न रक्षति, किम.क्षेपे ( सू० ) इति समासान्ताभाव । प्राकाश्ये- हिमालयो नाम नगाधिराज ( कु० सं० ) । संभाव्ये- कथं नाम समेष्यति । स्मृतिः संभावनैव- स नामाय बन्धु । क्रोधे- ममापि नाम दशानस्य परे परिभव । उपगम सासूयोऽङ्गीकार- एवमस्तु नाम । कुत्सने- को नामाय सार्वभुरुदय । अलीकविस्मययोश्च- दृष्टेधरे रोदिति नाम तन्वी, अन्धो नाम पर्वतमारोहति ॥ २५२ ॥ भूषणे- अलङ्कार । पर्याप्तौ- अलमस्त्यस्य धन, पर्याप्तमित्यर्थः । शक्तौ- अलं मल्लो मल्लाय । वारणे- अलमतिप्रसङ्गेन । अलंखल्वो प्रतिषेधयो ( सू० ) इति निषेधेपि- आलप्यालमिद बभ्रोर्यत्स दारानपाहरत् ( शिशु० ), न वक्तव्यमेतदित्यर्थ । वितर्के- चैत्रो हुं मैत्रो हुं । परिप्रश्ने- हुं स त्वं सुहृत् । भयादौ च- हुं राक्षसोयम् । भर्त्सने- हुं निर्लज्जः । अनिच्छायां हुं हुं मुञ्च । त्वा समयास्ते, त्वत्समीप इत्यर्थ । ग्रामं समयाऽऽस्ते, ग्राममध्य इत्यर्थः ॥ २५३ ॥ अप्रथमे -पुनरुक्तम् । ( भेदे ) विशेषे- किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ( भगवद्गीता ) । निश्चये- निष्फल । निषेधे- निर्मर्याद । प्रबन्धे- उपाध्यायेन स्म पुराधीयते, अविरतमपाठीत्यर्थः । चिरातीते -पुरापि न नव पुराणम् । निकटागामिके भविष्यदासन्ने- गच्छ पुरा देवो वर्षति, यावत्पुरानिपातयोर्लट् ( सू० ), समनन्तर वर्षिष्यतीत्यर्थ ॥ २५४ ॥ उररीकृत्य पट, विस्तीर्येत्यर्थः । आज्ञामुररीकृत्य याति, अङ्गीकृत्येत्यर्थ । स्वर्गे- एहि जाये स्वरारोहाव ( वाजसनेयीसंहिता ) । परलोके- स्वर्गतस्य सपुत्रस्य । वार्तायां- जघान कंस किल वासुदेव ( भाष्य० ) । संभाव्ये- अर्जुन. किल विजेष्यते कुरून् । हेत्वादौ च- स किल कविरेवमुक्तवान् ( वा० रा० ) । अलीके- गोत्रस्खलित किलाश्रुतं कृत्वा । अरुचौ- त्वं किल योत्स्यसे ॥ २५५ ॥ निषेधे- खलु कृत्वा, निषिद्ध करणमित्यर्थ. । वाक्यालंकारे- भयो

निषेधवाक्यालङ्कारजिज्ञासानुनये खलु ।
समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः ॥ २५६ ॥
नामप्राकाश्ययोः प्रादुर्मिथोऽन्योन्यं रहस्यपि ।
तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्तिषु ॥ २५७ ॥
अहहेत्यद्भुते खेदे हि हेताववधारणे ॥ २५८ ॥

इति नानार्थवर्गः । ३ ।

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।
मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः ॥ १ ॥
स्राग्झगित्यञ्जसाह्नाय सपदि द्राङ् मङ्क्षु[ च ]द्रुते ।
बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ २ ॥

---

सन्त्याहुः । जिज्ञासायां– स खलु कीले वेदम् । अनुनये– न खलु न खलु मुग्धे साहसं कार्यमेतत् ( नागानन्द० ) । अभितो ग्रामं वसति, सर्वत उभयत्र वेत्यर्थः । शीघ्रे– पच्छाभितः । साकल्ये– व्याप्नाल्यभितो रजः, समन्तादित्यर्थः । आभिमुख्ये– अभवन्नमभितोऽरिमस्तयत् ॥ २५६ ॥ नाम्नि– विष्णोर्दश प्रादुर्भावाः, मत्स्यकूर्मादीनि दश नामानीत्यर्थः । प्राकाश्ये– प्रादुरासीत् । अन्योन्यार्थे– मिथः प्रहरतः । रहसि– मिथो मन्त्रयते । अन्तर्धौ– तिरोहितः । परिभूतेऽन्तर्धावुपचारात्– तिरस्कृतोऽरिः । तिर्यगर्थे– तिरः काष्ठं कुरु । विषादे– हा रमणीया[ यो ] गतः कालः । शोके– हा प्रिये जनकराजपुत्रि (उ० रा०) । अर्तौ– हा हतोऽस्मि । निन्दायां च– हा श्रोत्रियान् ॥ २५७ ॥ अद्भुते– अहह महानद्यो राजः । खेदे– अहह हन्त विरहिणी बाला । हेतौ– भिक्षितापि बुभुक्षिता यदहहा । हेतौ– अग्निरत्र धूमो हि दृश्यते । अवधारणे– को हि हस्तगतं पादगतं कुर्यात् ॥ २५८ ॥ इत्यव्ययेष्वनेकार्थवर्गः । इति नानार्थवर्गः । ३ ।

चिराय निर्धनो भूत्वा मत्सहा( ता )महाधनः । चिररात्राय जायते [ यजते ] । चिरस्य भूतले पतति । आद्यशब्दाच्चिरेण चिराच्चिरात्– चिरंजीवी, चिरन्तनः । कान्तं[ न्तां ] मुहुर्ध्यायति । पुनः पुनर्वारि पिबेद्भृशि । शश्वद्धरिः सुशिक्षितः । अभीक्ष्णमारक्तायतीमकुम्भम् । असकृद्धरि ॥ १ ॥ स्रागवस्राभिसारिका । झगिति कुचतटादेनमो मन्मथाय (विद्वशाल०) । अञ्जसाञ्जसा ऽगमि मनस्तोषम् । अह्नाय सा नियमजं क्लमयुत्ससर्ज (कु० सं०) । सपदि मदनकुरक्षिताभिः । द्राग्विद्रुतं कान्तैः । मङ्क्षुकुरवि परितः पटलैरलीनाम् ( शिशु० ) । मङ्क्ष्विदं तत्सादि च– इति पठन्ति शिशिरानिल– मभिमुखम् ( रत्नावली० ), आश्वपोहि मम सीधुभाजनात्, तदभोदितारु सह जलेषु । तूर्णं द्रुतं क्षिप्रं शीघ्रं त्वरितं क्रियाविशेषणम् । बलवत्प्रिया शितेऽस्मि । सुष्ठु स्वस्त्विदमुच्यते । किमुत मध्यवेश्मिभिः । सुप्तस्य भ्राम. पञ्ति, अतिशिक्षत । अतीव मुरारेणापि( सांदि )तः ॥ २ ॥ पृथग्देवदत्तार्थं [ त्वत्तः पृथक् नास्ति वस्तु ] । विना मार्गं हरो देवः [ विना वातं विना वर्षम् ] । अन्तरेण पुरुषकारं न किंचित्सिध्यति । ऋते ज्ञानान्न हि मन्त्रपूतम् (कु० सं०) । हिरुक् कर्मणं[ णो ] मोक्षः, कर्मधर्म[ मो ] मोक्ष इत्यर्थः । नाना नारीर्निष्फला लोकयात्रा । अन्तरान्तरेणापि– त्वामन्तरा मामन्तरेण नास्ति, अ( आ )– रोपितमात्रमन्तरा । बलमात्र मनस्यसौ तन्त्रयोऽपि । यतो विद्वांस्ततो मन्त्रः । येन तेनादि च– किंच

पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने ।
यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ ३ ॥
कदाचिज्जातु सार्धं तु साकं सत्रा समं सह ।
आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ॥ ४ ॥
आहो उताहो किमुत विकल्पे किं किमूत च ।
तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥ ५ ॥
दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति ॥ ६ ॥
तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ।
स्युः प्याट् पाडङ्ग हे है भोः समया निकषा हिरुक् ॥ ७ ॥
अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ॥ ८ ॥
स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ।
किंचिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ॥ ९ ॥
वद्वा( वा ) यथा तथैवैवं साम्येऽहो हीति विस्मये ।
मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे ॥ १० ।

---

गिरमुदारा येन मूकाः पिकाः स्युः, नदीं तेन गतः, गमने नदी हेतुः । द्वितयो लक्ष्यते– येन दाता [ वोढा ] तेन श्लाघ्यः । ( ऊने ) किंचिद् ब्रूते । पद्भ्या याति कुनश्चन । प्रायः किंवृत्तात्परौ, क्वचित्– कुत्रचित्– कथंचित् ॥ ३ ॥ अन्योन्यपर्यायावेतौ– कदाचिच्छूरता याति मरणे कृतनिश्चयः, न जातु कामः कामानामुपभोगेन शाम्यति ( मनुः ) । सार्धं धनैर्महान् । पुत्रेण साकं याति । सत्रा कलत्रैर्गार्हस्थ्यम् । भ्रात्रा समं युध्यते । पुत्रैः सहास्ते । सङ्गो द्विजिह्वैः सजूरिति सजूरितिप्रतिरूपको निपातः । प्राध्वं कुरुध्वं बुधाः, प्राध्वंबन्धने ( सू० ) इति गतिसंज्ञा– प्राध्वकृत्य । वृथा दुग्धोऽनड्वान् । मुधैव मुधा ताम्यसि ॥ ४ ॥ विकल्पः पक्षान्तरं– स्थाणुराहो पुरुषः, उताहोस्विद् भरद्वाजो नलः परपुरंजयः, किमुत रज्जुः किमुत सर्पः [ किं रज्जुः किं सर्पः ], किमु सेवयेत्किमु मानयेत् , एकमेव वरं पुंसामुत राज्यमुताश्रमः । आख्यामि तु तत्त्वं ते । न हि न हि महिमानं प्राप्य तुष्यन्ति भूपाः । भीमः पार्थस्तथैव च । इति ह स्माहुराचार्याः । यो वै युवाप्यधीयानः । खल्वादयोऽपि– अहो न( नु ) खलु भोः । पूजने– सुस्तुतं, अविस्तुतम् ॥ ५ ॥ दिवातन, इतिशब्देन सप्तम्यन्ते दिनार्थेऽयमिति द्योत्यते । अथेप्येवम् । दोषामन्यमहः । नक्तंचर. । तथा– उषापि– उषातनो वायुः ॥ ६ ॥ साचि लोचनयुगं नमयन्ती । तिरः काष्ठं कुरु । प्याट् पाटकाः । पाट् पान्थाः । अङ्गानङ्ग, इत्याह्वाने चैनत् । हे चैत्र । हे वातूल । भो भार्गव । हंहो, अरेरे, अयि– हहो काम, रे चोर, अरे चेट, अयि प्रिये । एते समं पार्थेऽन्येऽन्यं पर्यायाः– समया ग्रामं, लङ्कां निकषा हनिष्यति ( शिशु० ) । सभ्यान् हिरुक् ॥ ७ ॥ सहसा विदधीत न क्रियाम् (किरातार्जु०) । अप्रार्थो एते– पुरःसरः । नासीरधूलिधवलाः पुरतः प्रयान्ति । अग्रतो धावति श्रीः ॥ ८ ॥ सोमाय स्वाहा । अस्तु श्रौषट् । मोही वौषट् । वषडिन्द्राय । पितृभ्यः स्वधा । किंचित्कुञ्चितमूर्धजाः । ईषत्स्मेरः मृतं मनागप्रपादंगम् । अन्यो धनं प्रेत्य गतस्य भुङ्क्ते । अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम् ॥ ९ ॥ पचतीति [ स्रवन्ती ]रत् । पद्मिनी[ नी ] वान्यहता[ पा ] ( मेघ० ) । यथा चैत्रस्तथा मैत्रः । शारदाभ्रमिव पेलवमायुः । यथार्क एवं कर्णः । अहो आश्चर्यम् । हतविधिललि( सि )तानां ही विचित्रो विपाकः ( शिशु० ) । मुनिस्तूष्णीमास्ते । अकच्प्रकरणेतूष्णीमःकाम्यकन्यः( वा० ) इत्यज्ञातार्थे विशिष्टे मौने तूष्णीकां, मौनमात्रे तूष्णीम् । सद्यः पाति मासेन । सपदि प्रहृत्युपेक्षितोऽपि ॥ १० ॥

दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा ।
अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ॥ ११ ॥
युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते ।
अभावे नह्यनो नापि मास्म मालं च वारणे ॥ १२ ॥
पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाञ्जसा द्वयम् ।
प्रकाशे प्रादुराविः स्यादोमेवं परमं मते ॥ १३ ॥
समन्ततस्तु परितः सर्वतो विष्वगित्यपि ।
अकामानुमतौ काममसूयोपगमेऽस्तु च ॥ १४ ॥
ननु च स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने ।
निष्षमं दुष्षमं गर्ह्ये यथास्वं तु यथायथम् ॥ १५ ॥
मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ।
स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १६ ॥
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् ।
संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ॥ १७ ॥

---

दिष्ट्या पुत्रो जातः । समुपजोषं वर्तते । आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ( महानाट० ) । अन्तरा त्वां च मां च कमण्डलु । यतो भवन्तमन्तरेणान्यया भूरनिर्वाहित., भवन्मध्येनेत्यर्थः । प्रसह्य वित्तानि हरन्ति चोराः ॥ ११ ॥ न सांप्रतं यत स्त्री नेता । स्थाने स्थाने प्रश्नः । अभीक्ष्णं वक्ति । शश्वद्याति, अविरतमित्यर्थः । नहि प्रेम प्रयोजनापेक्षम् । अविप्र इव भाषसे, विप्रवन्न भूय इत्यर्थः । नो जानीमः । नेकः सुप्तेषु जागृयात् । मास्म करो । मा कार्षीः । अलं बाले रोदनेन ॥ १२ ॥ अन्यथेद-मतेन किम् । यदि खलास्तत्कलङ्कं मृषा । अरे अद्धा पुरुषः । अञ्जसा वक्ति साधु । प्रादुरासीत् । आविर्भूतः । मतमभ्युपगमः– ओं कुरु, एवं कुरु, परमं तन्नावधन् । एवं माऽभिधार्यदि च ॥ १३ ॥ एते सर्वतोदिगर्थे– समन्ततो धावति, परितः प्रसरन्ति दुष्कृता( तो ) विपदः, सर्वतः सम्पदः सताम्, विष्वगवति विष्वग्यद् । इतिशब्दात्समन्तादित्यादि– समन्ताद्भवः सामन्तः । आदावनिच्छायां पश्चाद-ङ्गीकारे– कामं करोमि । अस्तुशब्दोऽसूयापूर्वाङ्गीकारे– अस्तुकारः, एवमस्तु को दोषः । चशब्दाद्भवतु नाम ॥ १४ ॥ ननु च क. शब्दः । कामप्रवेदनमिष्टपरिप्रश्नः– कच्चिज्जीवति मे माता । निष्क्रान्ताः समा दुष्टाः समा वत्सरा अत्रेति, तिष्ठद्गुप्रभृतीनि च ( सू० ) इत्यव्ययीभावादव्ययत्वम्, सर्वनाम्ने तदाचारात्, समेन समासो वा– निःषमं वक्ति मूर्खः, कालानुचितमित्यर्थः । एवं दुःषमं वर्तते । सर्वेषु यथायथम्, यथास्वं[ स्वं ]तमित्यर्थः, यथास्वेयथायथमिति ( सू० ) साधुः ॥ १५ ॥ नृपोऽयम् ( उ० रा० ) । मिथ्यावादी । तथेति सत्यमनतिक्रम्य– यथातथ्यं वक्ति सभासु विद्वान् । एकमेव । आत्मा सर्वं तु पश्यति । विनः पुनः पूज्यः । गुरुर्वा वक्ति मोक्षो वा । तमेव देवं सर्वं जानाति ॥ १६ ॥ प्राक् कृतम् । नूनं हन्तारिं रावणम् । अवश्यं भावाभावपरिसमाप्तिरिति विरक्तः ( भर्तृ० ) । संवत्सरः, संवत्सरीये । अवरः परादन्य.– वर्षं योऽस्माद्वर्वाक्, अर्वं कृतात्मन । आङ्गीकारार्थे– आं कुर्म, एवं कुर्म । स्वयम्भूः, आत्मनेति तृतीयान्तार्थे ॥ १७ ॥ नाचेमद्धारि । उच्चैरुच्चरितं चिरम् । कन्तः प्रायो निर्दिष्टः, मुधि बाहुल्यार्थे । अर्थं प्रार्थे– धनैराति निर्लिप्ता । कन्नेति ( धने. ) अनुनासिकान्ताद्–

अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः ।
सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ॥ १८ ॥
अस्ति सत्त्वे रुषोक्तावु(वु) ऊं प्रश्नेऽनुनये त्वयि ।
तर्के स्याद् (हुं तर्के) स्यादुषा रात्रेरवसाने नमो नतौ ॥ १९ ॥
पुनरर्थेऽङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसने ।
सायं साये प्रगे प्रातः प्रभाते निकषान्तिके ॥ २० ॥
परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ।
अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २१ ॥
तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ।
उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २२ ॥
ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽहनि ।
तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २३ ॥
एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ।
दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २४ ॥
इत्यव्ययवर्गः । ४ ।

---

शनैः शनैर्व्युपरमेत् । सनातनः । सनत्सनाच्च– सनत्कुमारः, सनात्कुमारश्च । बहिर्भूत । वक्ति स्म व्यासः, अवोचदित्यर्थः । अस्तं गतः ॥ १८ ॥ अस्तिक्षीरा स्त्री, अस्ति परलोके मतिरस्यास्तिकः । कोपनोक्तौ– उं सैवास्मि तव प्रिया । रुषेत्येव–ऊ न जानासि स्वार्थम् । अप्ययि साहसकारिणि । स्याद्वादिनो जैनाः । उषातनो वायुः । नमो देवेभ्यः ॥ १९ ॥ अमानुगुण्ये स्मरणे हुं फट् विघ्ननिराकृतौ । अहङ्कृतौ स्यादर्थे हूं हीनसंबोधने त्वरे ॥ मूर्खोऽपि नावमन्तव्यः किमङ्ग विद्वान् । दुष्ठुवादी खलः । सुष्ठूक्तम् । सीयते क्षीयते सायो निशामुख, घञ्– सायंतनो वायुः, सायम स्नानः सन्ध्यां वन्देत । प्रगेतनो वायुः । प्रातः संध्यामुपासीत । मित्र निकषास्ते ॥ २० ॥ पूर्वे वर्षे परुत् । पूर्वतरे वर्षे परारि । यति गच्छति वर्तमाने वर्षे– ऐषमः, सद्यःपरुत्परार्यैषमद्यति (सू०) साधवः । एवमग्रिमाः । अस्मिन्नहन्यद्य, वर्तमानतामात्रेऽप्याहुः– वरो लोकेऽद्य दुर्लभ (वंश:), तदर्थत्वेन तथा । पूर्वेऽह्नि पूर्वेद्युः । आदिशब्दादुत्तरेद्युः, अधरेद्युः, अपरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः । सुदिनमिति श्रीभोजः, यथा– द्युश्चन्द्रो द्योतते कथम् ॥ २१ ॥ उभयोरह्नोः– उभयेद्युः, उभयद्युः, द्युश्चोभयाद्वक्तव्यः (वा०) । स्मार्ते पाक्षिणर्षि रात्रिसंदिता । स हन्तास्मि परेद्यवि ॥ २२ ॥ अतीतेऽह्नि ह्यः– ह्योऽकरोत् । अनागतेऽह्नि श्वः– श्वो गन्ता । श्वोदिनात्परमहः परश्वः, पारस्करादित्वात् (सू०) परःसहस्रादिवत्सुट् । तस्मिन्काले तदा, तदो दा चेति (सू०) तदा, तदानीं च । एतौ तुल्यकालार्थौ । युगपत्समाः । एकस्मिन्काले- एकदा मिलन्ति । एकपदे च– अयमेकपदे तया वियोगः (विक्रमोर्वशी०) । सर्वस्मिन्कालेऽर्थे, सर्वैकान्यकिंयत्तदः काले दा (सू०), सर्वस्य सोऽन्यतरस्यां दि (सू०) ॥ २३ ॥ अस्मिन्कालेऽर्थे, इदमो र्हिल् (सू०), एतेतौ रथोः (सू०) इत्येतादेशः, (एतर्हि)– भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेववर्त्मनि (रघु०), अधुना, इदानीं च । संप्रत्येव सांप्रतं, स्वार्थेऽण् । प्राच्यां दिशि प्राचि देशे काले वा– प्राग्वसति । प्राच्या दिशः प्राचो देशात्कालाद्वा– प्रागागतः । प्राची दिक् प्राङ् देशः कालो वा– प्र रम्यम् । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः (सू०), अञ्चेर्लुक् (सू०) । आदिशब्दादुदगवागादि । एवं पूर्वादिभ्यः पुरस्तादधस्तादादि ॥ २४ ॥ इत्यव्ययवर्गः । ४ ।

सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।
अनुक्तैः सङ्ग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।
स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥
नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ।
अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥

---

इह लिङ्गसंग्रहवर्गे वक्ष्यमाणलिङ्गानुशासनसहितैः सुब्धातुकृदयादिजातै (शब्दैः) प्रागनुक्तैः लिङ्गमुन्नयेदूहेत । लक्षणेन तत्त्वतो ज्ञानार्थं सन्नाद्युपादानम् । लिङ्गशास्त्रेण यथा– स्त्रियामीदूद्विरामैकाच् । सुब्धातुवृत्तिजैर्यथा– अजयात् ( सू० ) ण्यासश्रन्थोयुच् ( सू० ) । कृद्वृत्तिजैर्यथा– स्त्रियां क्तिन् ( सू० ), पुंसि संज्ञायां घः प्रायेण ( सू० ), नपुंसके भावे क्तः ( सू० ) । गोबलीवर्दन्यायेनात्र सुब्धातुवृत्तिवर्जं कृद्वृत्तिरुदाहार्या । तद्धितवृत्तिजैर्यथा– तस्य भावः त्वतलौ ( सू० ) चेत्यादि । समासवृत्तिजैर्यथा– अदन्तैर्द्विगुरेकार्थ इत्यादि । कथमुन्नयेदित्याह– प्रागुक्तसंकीर्णवर्गवत्, वचननाम्नेणलक्षणे । उक्तं च प्राक्– प्रकृतिप्रत्ययाद्यर्थैः संकीर्णे लिङ्गमुन्नयेत् ( पृ० १८३ ) । प्रकृत्या यथा– अशनिः पुंसि च ( सू० ) । प्रत्ययेन यथा– स्त्रियां क्तिन् ( सू० ) । अर्थद्वारेण च यथा– मनुष्यजातीनाम् । आद्यशब्दः क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्ष्यति । तथा– अर्थस्य नियतसमासवचनं सर्वलिङ्गता चेत्यादि ॥ १ ॥ अथ लिङ्गानां प्रागुक्तानां शेषविधिस्तज्ज्ञो वर्गः उत्सर्गवाद् व्यापको भवत्यपवादैर्यद्यबाधितः स्यात् । यथा– असन्नन्ता अबाधिता पुंसि, तथा अन्नन्त मलोपन्व शिष्टमितः, यथा– चन्द्रमाः, पुरूरवाः, प्रथिमा प्रसवः, महिमा कल्पः । अपवादात् – द्व्यच्कमसिसुसन्नत तृतीये– इदं यशः, तेजः, नाम, धाम । ईदन्तमूदन्तं चैकस्वरं स्त्रीलिङ्गं भवति– इयं स्त्री, श्रीः, धीः, ह्रीः, भ्रूः, भूः, सूः, दूः, जूः । पुंलिङ्गात्मात् स्त्रियामित्यधिकारोऽयम् । योनिसंयुक्तानां प्राणिनां संज्ञा च स्त्रियाम्, यथा– इयं माता, स्वसा, स्नुषा, योषित्, इयं गौः सुरभिः, इयं करिणी नरी, इयमहिर्भुजगी, इयं करेणुर्हस्तिनी । दारादौ तु पत्नि पुंभूम्नि दाराः ( पृ० ९२ ) इत्याद्यपवादैर्बाध्यते । एवं सर्वत्राभेयम् ॥ २ ॥ एषां नामपर्यायाः स्त्रियाम्– इयं विद्युत्तडिदशनिः, इयं निशा रात्रिः, इयं वल्ली वीरुत्, इयं वीणा परिवादिनी, इयं दिक् ककुप्, इयं भूः कुः, इयं नदी सरित्, इयं ह्रीर्लज्जा । अकारान्ते शब्दे परे एकार्थे समाहारे यो द्विगुः स स्त्रियां, यदिष्टिः– अकारान्तोत्तरपदो द्विगुः स्त्रियामाष्यते, ( यथा ) त्रयाणां लोकानां समाहारस्त्रिलोकी, पञ्चमूलीनां पयः । स द्विगुः पात्राद्युत्तरपदैरदन्तैर्न स्त्रियां, पात्रादिभ्यः प्रतिषेध इति ( पात्राद्यन्तस्य न ), अत स नपुंसकमिति क्लीबे– पञ्चपात्रं चतुर्युगं, त्रिभुवनं, त्रिपुरं, प्राच्ये तु त्रिपुरी ॥ ३ ॥ तलन्तप्रत्ययान्ता स्त्रियां, तस्य भावस्त्वतलौ ( सू० )– गोर्भावो गोता अश्वता । ग्रामजनबन्धुसहायेभ्यस्तल् ( सू० )– ग्रामाणां समूहो ग्रामता, जनता । देवात्तल् ( सू० )– देव एव देवता । समूहे यादिप्रत्ययान्ता स्त्रियां, पाशादिभ्यो यः ( सू० ) ( पाशादिभ्यश्च )– पाशानां समूहः पाश्या । खलगोरथात् ( सू० ) यत् ( सू० ), इनित्रकट्यचश्च ( सू० ) चकारात् यत् ( सू० )– खलिनी, गोत्रा, रथकट्या । वैराद्यर्थे वुञन्ता स्त्रियां ( द्वन्द्वाद्वुन्वैरमैथुनिकयोः )– अश्वमहिषयोर्वैरम् अश्वमहिषिका, काकोलूकिका । कुत्सितमर्दान्यच्मैथुनयोजने विवाहे वैरमहिषिका, कौत्सकुशिका । आदित्सम्बन्धात् पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ( सू० ), दण्डव्यवसर्गयोश्च ( सू० ) द्वौ द्वौ पादौ द्विपदिकां ददाति, द्वे द्वे शते द्विशतिकां

तत्वृन्दे येनिकस्त्वत्रा वैरमैथुनिकादिवुन् ।
स्त्रीभावादावनिकिण्ण्वुल्ण्च्ण्वुच्क्यप्युजिञ्अड( इनि )शाः ॥४॥
उणादिषु निरूरीश्च ङ्याबूङन्तं चल स्थिरम् ।
तत्क्रीडाया प्रहरणं चेन्मौष्टा पाल्लवा णादिक् ॥ ५ ॥
घञो ञः सा क्रियास्यां चेद् दाण्डपाता हि फाल्गुनी ।
श्यैनपाता च मृगया तैलपाता स्वधेति दिक् ॥ ६ ॥
स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ।
लङ्का शफालिका टीका धातकी पञ्जिकाढकी ॥ ७ ॥
सिध्रका शा( सा )रिका हिक्का प्राचिकोल्का पिपीलिका ।
तिन्दुकी कणिका भङ्गि सुरङ्गासूचिमाढयः ॥ ८ ॥

---

द्विशतिका दद ति । उपलक्षणत्वाद् वुञन्तोऽपि, द्वन्द्वमनोज्ञादिभ्यश्च ( सू० ) इति वुञ्- शैष्योपाध्यायिका । गोत्रचरणाच्छ्लाघादौवुञ् ( सू० )- गार्ग्यस्य भाव कर्म चेति गार्गिकया श्लाघते, काठिकया श्लाघते । स्त्रियामित्यधिकृत्य भावे वा कर्तरि च कारके- अन्तादिप्रत्ययान्ता स्त्रियाम्, आक्रोशेनञ्यनिः ( सू० )- अजननिस्ते वृषल भूयात्, अकरणि । स्त्रियाक्तिन् ( सू० )- कृति, भक्ति । रोगाख्यायां ण्वुल्बहुलम् ( सू० )- प्रवाहिका, विपादिका । धात्वर्थनिर्देशेण्वुल्वक्तव्य ( वा० )- कारिका, जाविका । कर्मव्यतिहारेणच्स्त्रियाम् ( सू० )- अन्योन्य व्यावक्रोशन व्यावक्रोशी वर्तते, व्यावभाषा[ हासी ], णच स्त्रियामञ् ( सू० ) स्वार्थे । पर्यायार्हणो त्पत्तिषुण्वुच् ( सू० )- भवत शायिका, इक्षुभक्षिकोत्पन्ना । व्रजयजोर्भावेक्यप् ( सू० )- व्रज्या, इज्या । संज्ञायांसमजनि ( सू० ) क्यप्- समज्या, निषद्या । हनस्तच ( सू० ) इति क्यप्- ब्रह्महत्या । ण्यासश्रन्थोयुच् ( सू० )- मण्डना, आसना । प्रश्नाख्यानयोरिञ् ( चान्द्रसू० )- का कारिमकार्षी, इमां कारिमकार्षम् । षिद्भिदादिभ्योऽङ् ( सू० )- घटा, मृजा, भिदा । अप्रत्ययात् ( सू० )- चिकीर्षा, पुत्रीया । कृञः शच ( सू० )- क्रिया, इच्छा ॥ ४ ॥ उणादौ न्यन्त ऊदन्त ईदन्तश्च स्त्रियां- अरणि, धमनि, ह्रानि, ज्यानि, ग्लानि, अलाबू, जम्बू, लक्ष्मी, तन्त्री । ङ्यन्तमाबन्तमूङन्त चाभिधेयलिङ्गं स्थलिङ्गं च स्त्रियां- पुंस इव गौरी बुद्धि, हिमानी, अजा, बलाका, श्वश्रू, ब्रह्मबन्धू । मुष्टि प्रहरणं यस्यां क्रीडायां मौष्टा, पल्लवा प्रहरणमस्यां पाल्लवा, तदस्यां प्रहरणमिति क्रीडायांण. (सू० ), णदिक्- णप्रत्ययोदाहरणमित्यर्थः ॥५॥ दण्डपातोऽस्यां फाल्गुन्यां वर्तते श्येनपातोऽस्यां मृगयायां वर्तते, तिलपातोऽस्यां स्वधायां वर्तते, घञ सास्यांक्रियेति ( सू० ) ञ, श्येनतिल्योपातेये ( सू० ) इति मुक्, स्वधा स्त्यस्यां स्वधा श्राद्धम् ॥ ६ ॥ अपचयेऽल्पत्वे यदि वक्तुमिच्छा तदा मृणाल्यादय स्त्रीलिङ्गा स्यु । अपचयेऽपचयस्यानल्पत्वानि हि स्त्रीपुनपुंसकानि । आदिशब्दाद्गगाली, सटी, मठी, छत्रिका, वृक्षकाण्डी । काचिदिति यत्र लोके पुंनपुंसकयो स्त्रीत्वं दृश्यते, न सुभादौ । लङ्का राक्षसपुरी । शफालिका पुष्पविशेष । टीका वृत्ति । धातकी नामौषधि । पञ्जिका न्यास । आढकी व्रीहिभेद, स्वल्पाढक च ॥ ७ ॥ सिध्रकाशारिके वृक्षभेदौ । हिक्का- ऊर्ध्व वातप्रवृत्तो शब्द । प्राचिका पक्षिविशेष । उल्का ज्वाला । पिपीलिका पलोऽस्त्रमि । योऽसावपि प्रागनुक्तो स स्यातिरप्यनेनोच्यते, अत एवैतयोर्न पिपीलिक इति पुंनामनिषेधम् । एव सर्वत्र । तिन्दुकी नाम वृक्ष. फल च । कणिका- अल्पकण- गोधूमपिष्ट च । भङ्गिर्भङ्गिरिति । सुरङ्गा तिर्यग्भूखात । सूचि सीवनी । माढिर्नाम देश्य वचनं च ॥८॥ पिच्छा-आचाम । पिल्लगा स्वाऽल्पद्यानन्ना( नो ) हीनो जल ।

पिच्छावितण्डाकाकिण्यूर्णिः शाणी द्रुणी दरद् ।
सातिः कन्या तथासन्दी नाभी राजसभापि च ॥ ९ ॥
झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।
लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥ १० ॥
पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।
स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥
करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।
अह्नाह्नान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥ १२ ॥

---

काकिणी नाम माषकचतुर्थभागः, पणचतुर्थभाग इत्येके । काकिनीति सभ्या । ऊर्णा मेषलोम । शाणी निकषः, शाण इत्येके, कषपीठे संकोचोर्थे । द्रुणी कांजकैका । दरद् म्लेच्छजातिः । सातिः सावार-विशेषः । कन्या खण्डः स्थूल वासः । आसन्दी पीठिका । नाभी तुन्दिः । राज्ञः सभा राजसभा, सभाराजामनुष्यपूर्वेति ( सू० ) राजनिवेशार्थे न्दम् ॥ ९ ॥ झल्लरी वाद्यविशेषः । चर्चरी हर्षक्रीडा । पारी पानभाण्डम् । होरा लग्न जातकं च । लट्वा–अलका भ्रमरश्च । सिध्मला पाला मत्सः श्विन्न च । लाक्षा जतुः । लिक्षा यूकागर्भः । गण्डूषा– अम्बुचुलुकं, गण्डूषोपि । गृध्रसी– ऊरुस्तम्भो वातरुक् । चमसी ममूराद्यिपिष्टं हव्यचमसश्च । मसी रजनी । इति स्त्रीलिङ्गशेषः ॥ १० ॥ सुरा असुरास्तद्विशेषा-स्तदनुचराश्च पर्यायैः सह पुंसि । सुरा दिवौकसः, सुरविशेषाः–इन्द्रो बिडौजाः शक्र, आदित्य- सूर्यो रविः, ब्रह्मा स्वयंभू, विष्णु शौरिः, रुद्र- शम्भुः । विष्णोरनुचराः– चण्ड- प्रचण्डः, जयो विजयः, विष्वक्सेन । रुद्रानुचरा – नन्दी महाकालो भृङ्गी, गणाः प्रमथाः । एवं सर्वत्र । असुरा पूर्वदेवा दैत्या दानवाः, तद्विशेषा – विरोचनो बलिर्नमुचिः प्रह्लादः । प्राड् नपुंसकाधिकारात्पुंलिङ्गाधिकारः । एते सभेदाः सपर्यायाः पुंसि । स्वर्गो नाकस्त्रिदिव । यागः क्रतुः सप्ततन्तुः, तद्विशेषा – अग्निष्टोम उक्थ्य विश्वजित्– अश्वमेधः । अद्रिः पर्वतः शैल, तद्विशेषा – मेरुर्हिमवान् हिमवान् मलयो विन्ध्यः पारियात्रः । मेघस्तडित्वान् घनः, तद्विशेष. पुष्करावर्तक । अब्धिः समुद्र उदन्वान्, तद्विशेष. क्षीरोदः । द्रुमः पादपः, तद्विशेषः– अश्वत्थाम्रपनसः । काल समय, तद्विशेषा – क्षणो लव, मुहूर्तः, पक्षप्रहरः, संवत्सरः । असिः करवालः, तद्विशेषा – नन्दकचन्द्रहास. । शरः सायक. पृषत्कः सुपत्नः । अरिर्द्विष-न्मित्र ॥ ११ ॥ करः पाणिर्हस्तः । गण्डः कपोल. । ओष्ठो दन्तच्छदोधर । दोर्बाहुः । दन्तो दशनः । कण्ठो गल । केशो वालश्चिकुरः । नख करुहः । स्तनः पयोधरः । अह्नान्ता अह्नान्ता अह्नोत्तरपदाः पुंसि, रात्राह्नाहाः पुंसि ( सू० ) इति– पूर्वाह्णः, मध्याह्न, सायाह्नः । द्व्यहः, त्र्यहः, उत्तमाहः, परमाहः, राजाह.सखिभ्यष्टच् ( सू० ), अह्नोह्न एतेभ्य. ( सू० ) इत्यह्नादेश । विषविशेषा. पुंसि– हालाहल गरलः कालकूटो हलाहल । पुंसि क्लीबे च प्रयुक्तत्वात्पुंसि पठितः पाक्षिकोऽयं विधिः । एवं सर्वत्र । विषं तु क्लीबे । सर्वाद्यन्तपूर्वः संख्यातपुण्यात् रात्रान्ताः पुंसि– अहोरात्र, द्विरात्रः, सर्वरात्रः, अह सर्वैकदेशसंख्यातपुण्याच्च रात्रेः ( सू० ) इत्यच्, नेह– त्रिरात्रं, पञ्चरात्रम् ॥ १२ ॥ क्ष्वेडः सर्पविषे कर्पूरः । निर्देशो ह्रस्वान्त । अकारान्ता अदन्ताबाधिता अन्तोदात्त ( द्वि )रा पुंसि– पुरोडाशः, उशना, मत्वा. ( हा ) । अवा- धिता इति किं– इदं यतो जगत्, इदं स्वेन, इदं धाम । प्राग्भवन्ति पुंस्त्वस्याभिधानात् वक्ष्यते । कृतोऽयं नियमस्तथा ह्रस्वान्तश्च पुंसि– अयं वायुरेषपरः, मरुत्, मरुद्, धनुः, शिरस्कं- स्थानं, स्तम्भ गङ्गाजलस्नुष्टि, मदनेन, ऊरु स्थित । नेह– इदं क्षेत्रे जठरः कन्द, जतु लाक्षा,

ग्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ।
कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३ ॥
कषणभमरोपान्ता यद्यदन्ता अमी अथ ।
पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥
नाम्न्यकर्तरि भावे च घञजबूल्नङ्णघाथुचः ।
ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोन्यतः ॥ १५ ॥
द्वन्द्वेऽश्ववडवावश्ववडवानसमाहृते ।
कान्तः सूर्येन्दुपर्यायपूर्वोयःपूर्वकोपि च ॥ १६ ॥
वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ।
पुङ्खो न्युङ्खः समुद्गश्च विटपट्टघटाः खटः ॥ १७ ॥
कोट्टारघट्टहट्टाश्च पिण्डगौड( गोण्ड )पिचण्डवत् ।
गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥

---

घस्तु पदार्थः ॥१३॥ ककारादिद्वादशाक्षरोपधा अकारान्ताः पुंसि । क- शल्कः, वृकः, श्वेतकः, वराटकः । ष- वृषः, कक्षः, निकषः । ण- गणः, शणः, बाण , कणः । भ- कुम्भः, शलभः । म- आचामः, धूमः, ग्रामः । र- अङ्कुरः, करः, दरः, समीरः । प- सर्पः, सूपः, कलापः, बाष्पः । थ- सार्थः, शपथः, नाथः । न- फेनः, हायनः, स्तनः, जनः । य- तनयः, व्ययः, तन्तुवायः । स- रसः, दासः, कुसः, वत्स. । ट- सरटः, पटः, कटः । अपत्यप्रत्ययान्ताः शाखाध्यायिनश्च पुंसि- गार्ग्यः, वासिष्ठः, दाक्षिः, कठः, बह्वृचः, छन्दोगः ॥ १४ ॥ अकर्तरि च कारके संज्ञायां भावे चार्थे घञन्तादयः पुंसि । घञ्- प्र( प्रा )सीदन्त्यस्मिन्नयनमनांसीति प्र( प्रा )सादः, प्रक्रियते प्रकारः, पाकः, त्यागः, अकर्तरिच- कारकेसंज्ञायां ( सू० ) घञ् । अच्- पचः चयः, नयः, पचाद्यच् ( नन्दिग्रहीति ), एरच् ( सू० )। अप्- करः, भरः, स्तवः, लवः, प्लवः, ऋदोरप् ( सू० )। नङ्- यज्ञः, यत्नः, प्रश्नः, यजयाचयत- विच्छेति ( सू० ) नङ् । उपलक्षणत्वात्- स्वप्नोनन् ( सू० )। णः- न्यदनं न्यादः, नौणचेति ( सू० ) णः । घः- प्रहरः, निगमः, गोचरः, पुंसिसंज्ञायांघःप्रायेण ( सू० )। अथुच्- आनन्दथुः, श्वयथुः, वेपथुः, ट्वितोथुच् ( सू० )। कर्तरि ल्युः पुंसि- नन्दयति नन्दनः, रमयति रमणः, नन्दिग्रहिपचेति ( सू० ) ल्युः । इमनिजन्ताः पुंसि- पृथोर्भावः प्रथिमा, लघिमा, पृथ्वादिभ्यइमनिज्वा ( सू० )। भाव इति किं- तीमा पृथ्वी, च[ व ]रिमा तपस्वी, औणादिक इमनिच् । भावे कप्रत्ययान्तः पुंसि- आखू- नामुत्थानमाखूत्थो वर्तते, सुपिस्थः ( सू० ) इति योगविभागात्कः । घञर्थेकविधानं ( वा० )- प्रस्थः, प्रघ्नः । प्रादित उपसर्गादन्यतः सुबन्ताच्च परात् घुसंज्ञकात्परो यः किप्रत्ययस्तदन्तः पुंसि- निधिः, प्रधिः, आधिः, आदिः, उपसर्गेघोःकिः ( सू० ), अन्तर्धिः, इषुधिः, कर्मण्यधिकरणेच ( सू० ) इति किः ॥ १५ ॥ समाहारादन्यत्र द्वन्द्वेऽश्ववडवौ- अश्ववडवाः पुंसि, द्विबहुवचनयोरुदाहरणम् । नेह- अश्ववडवं, विभाषा- वृक्षमृगेति ( सू० ) समाहारविकल्पः । सूर्यादिपूर्वः कान्तशब्दः पुंसि- सूर्यकान्तः, भास्वत्कान्तः, इन्दु- कान्तः, चन्द्रकान्त , अयस्कान्तः ॥ १६ ॥ वटको भक्ष्यविशेषः । अनुवाक ऋग्यजुःसमूहः । रल्लकः पक्ष्मकम्बलः । कुडङ्गको वृक्षलतागहनम् । पुङ्खः काण्डमूलम् । न्युङ्ख ओंकाराः षोडश । समुद्गः कलङ्कः । विटः कामुकानुचरः । पटः उष्णीषादिः । घटो दारुतुला । खटस्तृणम् ॥ १७ ॥ कोट्टो दुर्गः । अरघट्टो महाकूप. । हट्ट आपणः । पिण्डो मास. । गौडो गुडको देशविशेषो वा । पिचण्ड उदरम् ।

कोट्याः शतादिः संख्यान्या वा लक्षा नियुतं च तत् ।
द्व्यचकमसिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥
त्रान्तं सनो( लो )पधं शिष्टं रात्रं प्राक्संख्यायान्वितम् ।
पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥
द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ।
षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥ २६ ॥
शालार्थापि परा राजामनुष्यार्थादराजकात् ।
दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।
कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ॥ २८ ॥

---

मदनः । कथमास्थानमास्थानी, करणं करणी, प्रमाणं प्रमाणी, अधिकरणमधिकरणी, राजधानं राजधानी' ल्युटष्टित्वात्, किं च, कृत्यल्युटोबहुलम् ( सू० ) इत्यनान्तानां त्रिलिङ्गत्वं स्म[ स्व ]रन्ति– राजभोजनी क्षैरेयी, राजभोजनः शालिः, राजभोजनं भक्तम्, इध्मव्रश्चनी शर्वा, इध्मव्रश्चन· परशु', इध्मव्रश्चनं शस्त्रम्, पलाशशातनी, पलाशशातनः, पलाशशातनम्, पूरणी, पूरणः, पूरणम्, गोदोहनी घटी, गोदोहनो घटः, गोदोहनं भाण्डम् ॥ २४ ॥ केवलं त्रान्तं, सकारनकारोपधं त्रशब्दान्तं च, शिष्टं प्रागुक्तादन्यच्छन्दरूपं तृतीये– पात्रं, अमत्रं, दात्रं, कलत्रं, शस्त्रं, वस्त्रं, शास्त्रं, अस्त्रं, तन्त्रं, मन्त्रम् । शिष्टमिति किं– पुत्रः, औपवस्त्रः, मन्त्रः । संख्यापूर्वं रात्रान्तं तृतीये, रात्राह्नाहाः पुंसीति ( सू० ) पुंस्त्वं प्राप्तम्– तिसृणां रात्रीणां समाहारस्त्रिरात्रम्, एवं पञ्चरात्रं, षड्रात्रम् । संख्ययेति किं– वर्षारात्रः । पात्रादिभिरकारान्तै-रुत्तरपदैः समाहारे लक्ष्यानुसारेण यो द्विगुः स तृतीये– पञ्चपात्रं, त्रिभुवनं, त्रिपुरदाहमुमापतिसेविनः ( किरातार्जु० ), चतुर्युगम् । पात्रादीति किं– त्रिलोकी, त्रिवेदी । एकार्थ इति किं– पञ्चकपालः पुरो-डाशः । लक्ष्यानुसारत इति किं– त्रिपुरी, पञ्चमूलाश्रृतं पय' ॥ २५ ॥ द्वन्द्वस्य यदेकत्वं समाहारोऽव्ययी-भावश्च समासस्तृतीये– इदं पाणिपादं, मार्दङ्गिकपाणविकं, स्त्रीषु कथा वर्तत इदमधिस्त्रि, इदं तिष्ठद्गु कालः, इदमुन्मत्तगङ्गं देशः । संख्याव्ययाभ्यां परः कृतसमासान्तः पथिशब्दस्तृतीये– त्रयाणां पथां समाहारास्त्रिपथं, विरुद्धः पन्था विपथं, कुत्सितः पन्था कापथम् । संख्याव्ययादिति किं– धर्मपथः । षष्ठ्यन्तात्परा कृतसमासान्ता छाया तृतीये बहूनां चेत्– गृध्राणां छाया गृध्रच्छायं, वीनां छाया विच्छायं, शलभच्छायं, छायाबाहुल्ये ( सू० ) इति नपुंसकम् । बहूनामिति किं– वृक्षस्य च्छाया वृक्षच्छाया । षष्ठ्याः परा समासे समूहार्था सभा तृतीये– दासीनां सभा दासीसभं दासीसमूह इत्यर्थः, ब्राह्मणसभं, अशाला च ( सू० ) इति नपुंसकम् । संहताविति किं– दास्याः सभा गृहं दासीसभा ॥ २६ ॥ राजार्थे-भ्योऽमनुष्यार्थेभ्यश्च षष्ठ्यन्तेभ्यः परा समूहार्था शालार्थापि सभा तृतीये, राजशब्दपरा चेन्न स्यात्– नृपस्य सभा गृहं नृपाणां समूहो वा नृपसभं, ईश्वरसभं, रक्षःसभं, पिशाचसभम् । अराजकादिति किं– राजसभा, सभाराजामनुष्यपूर्वा ( सू० ) इति नपुंसकम् । इमा दिश इमान्युदाहरणानीत्यर्थः ॥ २७ ॥ उपज्ञायत इत्युपज्ञा, उपक्रम्यत इत्युपक्रमः, तदन्तः शब्दः षष्ठीसमासे तदादिकथने द्योत्ये तृतीये– यथा कस्योपज्ञा कोपज्ञं सर्गः, चन्द्रोपज्ञमसंज्ञकं व्याकरणं, पाणिन्युपज्ञमकालकं व्याकरणं, कस्योप-क्रमः कोपक्रमं सृष्टिः, नन्दोपक्रमाणि मानानि । तदादित्वं इति किं– डित्थोपज्ञो रथः, चैत्रोपक्रमो घटः, उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ( सू० ) इति नपुंसकम् । उशीनरदेशे या कन्था षष्ठ्याः परा सा संज्ञायां गम्यमानायां तृतीये– सौशमीनां कन्था सौशमिकन्थम् । उशीनरेति किं– दाक्षिकन्था । नाम-

मावे नणकचिद्भ्योन्ये समूहे भावकर्मणोः ।
अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥ २९ ॥
क्रियाव्ययानां भेदकान्येकत्वेप्युक्थतोटके ।
चोचमुक्तं गृहस्थूणं तिरीटं मर्मयोजने ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।
माणिक्यभाण्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलस्थालवाह्लव( ह्लिक )म् ।
पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥
मोदकस्तण्डकष्टङ्कः शाटकः खर्वटोऽर्बुदः ।
पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥

---

स्विति किं– चैनकन्या, संज्ञायांकन्योशीनरेषु ( सू० ) इति नपुंसकम् ॥ २८ ॥ नणकेभ्यश्चकारानुबन्धेभ्यश्च येन्ये भावेर्थे कृतस्तथा समूहेर्थे भावकर्मणोश्च ये तद्धितास्ते ते मलया येषां ते शब्दास्तृतीये– समन्ताद्भावः सारादिणं वर्तते, साकूटिनं वर्तते, अभिविधौभावइनुण् ( सू० ), अणिनुणः ( सू० ) इति स्वार्थेऽञ् । ब्रह्मणो भवनं ब्रह्मभूयं गतः, भुवोभावे ( सू० ) इति क्यप् । नणकचिद्भ्योन्य इति किं– ( न )– मदनः, यलः, ( ण )– न्यदन न्यादः, नौणचेति ( सू० ), ( क )– आप्लवनामुत्थानमाप्लवथः, सुरिस्थः ( सू० ) इति योगविभागात्क , ( चित् )– श्वयन श्वयथुः, ट्वितोथुच् ( सू० ), आसनमासना, भावना, ण्यासश्रन्थोयुच् ( सू० ) । समूहादौ तद्धिनाः खल्वपि– भिक्षाणां समूहो भैक्ष, यौवतं, राजक, धौक्षकं, गोभावो गोत्वं, शुक्रस्य भावः कर्म वा शौकल्यं, मार्दवं, मानोज्ञकं, स्तेयम् । पुण्यसुदिनाभ्यां परः कृतसमासान्तोह शब्दस्तृतीये– पुण्यं च तदहश्च पुण्याहं, सुदिनशब्दोत्र शोभनवाची, यथा– सुदिनासु समसु कार्यमेतत्, पुण्यसुदिनाभ्यामह्नोवक्तव्यात् ( वा० ) नपुंसकत्वम् ॥ २९ ॥ क्रियाविशेषणान्यव्ययविशेषणानि च तृतीये– एकवचनान्तानि च भवन्ति– मृदु पचति, शोभनं पचति, पूर्वस्या दिशि देशे काले वा पुरस्ताद्रम्यं, श्वः शोभनम् । एते शब्दास्तृतीये– उक्थं सामविशेषः, तोटक वृत्तभेदो दशरूपकभेदश्च, चोचं भुक्तोच्छिष्टा फेला, नारिकेरफलस्य फल्त्वात्विद्ध, उक्तमेकाक्षरं छन्द , अत्युक्त च द्व्यक्षरम् । गृहस्य स्थूणा गृहस्थूणम् । तिरीटं शिरोवेष्टनम् । मर्म संधिस्थानम् । योजनं चतुःक्रोशी ॥ ३० ॥ राजसूयवाजपेये यज्ञविशेषौ । कविकर्मण्येते द्वे तृतीये– गद्य दण्डकबन्धः, पद्य श्लोकबन्धः । कृतौ कवेरिति किं– गद्या छी, पद्या शर्करा । माणिरेव माणिक्यम् । भाण्यं चूर्णं । सिन्दूरं चीनपिष्टम् । चीरं वार्क्षी त्वक् । चीवर मुनिवास । पञ्जरं पक्ष्यादिबन्धनगृहम् ॥ ३१ ॥ लोकायत नाम तर्कः । हरितालं धनुर्भेद । विदल दाडिमकणः, फल[ ले ]स्य विदम् । स्थालं भोजनपात्रम् । बाह्लवं देश. । इति नपुंमकलिङ्गशेष । अयमिदं वार्धमृचोर्धर्चः । पिण्याकं खलि । कण्टक स्तारोम ॥ ३२ ॥ मोदक भक्ष्यविशेष । तण्डक परिष्कारः, दण्डको बाणम् । टङ्कोश्मदारण । शाटकं पटः । खर्वटश्चतुःशतग्रामाणां मध्यस्थानम् । अर्बुदोक्षिरोगः सङ्ख्याविशेषश्च, पर्वते तु पुंलिङ्ग । पातको गोहत्यादिः । उद्योग उत्साह । चरक शास्त्रविशेषः । तमालं वृक्षभेद । आमलको धात्रीफल, वृक्षे त्वामलकी । नडोन्तः– सुषिर तृणम् ॥ ३३ ॥ कुष्ठ त्वग्रोगः, द्रव्यं च । मुण्ड शिर, मुण्डिते तु वाच्यलिङ्गम् । शीधुर्मद्यम् । शुल्तं माषशष्कुली । क्ष्वेडित मुखध्वनिभेदः । क्षेमं कुशलम् । कुट्टिन निर्वृत्तः कुट्टिमो मणिभू । सगमो

कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ।
संगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥
कवियं कन्दकर्पासं पारावारं युगंधरम् ।
यूपं ( यूषं ) प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ ३६ ॥
स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ।
जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥ ३७ ॥
मुनिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ।
मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कुटी कटी ॥ ३८ ॥
स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ।
औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ॥ ३९ ॥
षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः ।
स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ॥ ४० ॥

---

नद्यादिमेलः । शतमानं रूप्यपलं, यत्स्मृतिः– द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते । शतमानं तु दशभिर्धरणैः पलमेव च ॥ अर्मोऽक्षिरुक् । शम्बलः पथिव्ययः ( पाथेयं ) । अव्ययमलिङ्गमसंख्यम् । ताण्डवं नृत्यम् ॥ ३४ ॥ कवियमश्वमुखबन्धनम् । कन्दं मूलविशेषः । कर्पासं बादरम् । पारं नद्याः परपार्श्वम् । अवारमर्वाक्पार्श्वम् । युगंधरं रथकाष्ठम् । यूपं क्रिमुक ( ? ) । प्रग्रीवं वातायनम् । पात्रीवं यज्ञोपकरणम् । यूषं मुद्गादिनिर्यासः । चमसं यज्ञेऽम्बुप्रणयनम् । चिक्कसं यवपिष्टम् ॥ ३५ ॥ अर्धर्चादिगणे पूर्वैर्घृतादीनां पुंस्त्वं यदुक्तं तन्निश्चितं छान्दसम् । अत इह लौकिके नोक्तम् । अथ प्रमादाल्लोके दृश्यते यदि तल्लिङ्गशेषवत् [ त्वा ]दङ्गीकार्यम् ॥ ३६ ॥ इति पुंनपुंसकशेषः । स्त्रीपुंसयोः शेषो वक्ष्यत इति शेषः । अपत्यप्रत्ययान्ताः स्त्रीपुंसयोः– वासिष्ठः– वासिष्ठी, गार्ग्यः– गार्गी । द्विपदादयो जातिविशेषाः स्त्रीपुंसयोः– पुरुषः– पुरुषी, कठः– कठी, कुक्कुटः– कुक्कुटी, मृगः– मृगी, अयं गौः– इयं गौः, अयं कपिः– इयं कपिः, भ्रमरः– भ्रमरी, वरटः– वरटी, उरगः– उरगी, अयमहिः– इयमहिः । एते मल्लकादयः शब्दाः स्त्रीयोगैः सह पुमाख्याः स्त्रीनरलिङ्गा इति शेषः ॥ ३७ ॥ ३८ ॥ इति पुंस्त्रीलिङ्गशेषः । सिंहावलोकितेन ( न )पुंसीत्येव द्वयोः । भावे कर्मणि च ष्यञन्तः स्त्रीनपुंसकलिङ्गः– यथा– उचितस्य भावः कर्म वा, ( गुणवचन )ब्राह्मणादिभ्यः कर्मणि च ( सू० ) इति ष्यञ्, एवं वैदग्ध्य– वैदग्धी, साम्रग्र्य– सामग्री । चोरस्य भावः कर्म वा चौरिका– चौरिकम् । क्वचिद्ग्रहणाद्वुञ्– शौक्ल्यं, प्राक्रम्यं, मानोज्ञकं, रामणीयकं, साहायकं, शैषोपाध्यायिका, गार्गिका, काठिका ॥ ३९ ॥ षष्ठ्यन्तपूर्वपदाः सेनादयः स्त्रीनपुंसकयोः– नृणां सेना नृसेनं नृसेना, शुनां निशा श्वनिशं श्वनिशा, भूतनिशं भूतनिशा, गवां शाला गोशालं गोशाला । एवमितरे छायासुरे उदाहार्ये, यथा– वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छायं वृक्षच्छाया, यवसुरं यवसुरा ॥ ४० ॥ आवन्तोत्तरपदो द्विगुरन्नन्तोत्तरपदो द्विगुश्चापुंसि स्त्रीनपुंसकयोः, नस्य च लुग्भवतीति प्रसङ्गाल्लक्षणानुवादः– तिसृणां रात्रीणां समाहारस्त्रिरात्रं त्रिरात्री,

आद्यन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ।
त्रिखट्वं त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥
त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ ।
परलिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेपि तत् ॥ ४२ ॥
अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।
तद्धितार्थे द्विगुः संख्यासर्वनामतदन्तकाः ॥ ४३ ॥
बहुव्रीहिरदिङ्नाम्नामुन्नेया तदुदाहृतिः ।
गुणद्रव्यक्रियायोगोपाधयः परगामिनः ॥ ४४ ॥

---

त्रयाणां तक्ष्णां समाहारस्त्रितक्षं त्रितक्षी ॥ ४१ ॥ इति स्त्रीनपुंसकशेषः । एते त्रिलिङ्गाः– पात्री भाजनं, पुटं आच्छादनं, वाटो वृतिः, पेटः संहतिः परिच्छदश्च, कुवलं कोलिफलं, दाडिमं विदकम् । इति त्रिलिङ्गशेषः । स्वप्रधाने इतरेतरयोगद्वन्द्वे तत्पुरुषे चोत्तरपदस्य यल्लिङ्गं तद्भवति– कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ, कुलविशेष, विप्रकुलमिदं, अर्धं पिप्पल्या अर्धपिप्पलीयं, चन्द्रार्थोयं, परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ( सू० ) ॥ ४२ ॥ अर्थशब्दान्ताः प्राद्यलंप्राप्तापन्नपूर्वाश्च परोपगाः वाच्यलिङ्गा इत्यर्थः । ब्राह्मणायेयं ब्राह्मणार्था शिखरिणी, ब्राह्मणार्थं ओदनः, ब्राह्मणार्थं पयः, अर्थेननित्यसमासःसर्वलिङ्गता च ( वक्तव्या ) ( वा० ), प्रगत आचार्योस्याः प्राचार्या, प्राचार्यः, प्राचार्यं, प्रादयोगताद्यर्थेप्रथमया ( वा० ), प्रादिभ्योधातुजस्यवाच्योवा ( वा० ) इत्युत्तरपदलोपः । अतिक्रान्ता खट्वामतिखट्वा, अतिखट्वः, अतिखट्वं, अत्यादयः क्रान्ताद्यर्थेद्वितीयया ( वा० ) । अवक्रुष्टा कोकिलया चूतकलिकावकोकिला, अवकोकिलः, अवकोकिलं, अवादयः क्रुष्टाद्यर्थेतृतीयया ( वा० ) । परिग्लानाध्ययनाय पर्यध्ययना, पर्यध्ययनः, पर्यध्ययनं, पर्यादयोग्लानाद्यर्थेचतुर्थ्या ( वा० ) । निष्क्रान्ता मर्यादाया निर्मर्यादा, निर्मर्यादः, निर्मर्यादं, निरादयःक्रान्ताद्यर्थेपञ्चम्या ( वा० ) । अलं जीविकायै– अलंजीविका, अलंजीविकः, अलंजीविकम् । प्राप्ता जीविकां प्राप्तजीविका, प्राप्तजीविकः, प्राप्तजीविकम् । आपन्ना जीविकामापन्नजीविका, आपन्नजीविकः, आपन्नजीविकं, प्राप्तापन्नेच द्वितीयया ( सू० ) । वाच्यलिङ्गा इत्यर्थः । पञ्चसु कपालेषु संस्कृता पञ्चकपालापूरिका, पञ्चकपालः पुरोडाशः, पञ्चकपालं हविः । संख्या सर्वनाम च तदन्ताश्च वाच्यलिङ्गाः– एका, एकः, एकं, तिस्रः, त्रयः, त्रीणि, सर्वा, सर्वः, सर्वम् । संख्यान्ताः– ऊनास्तिस्रो यासां ता ऊनतिस्रः, ऊनत्रयः, ऊनत्रीणि । सर्वनामान्ताः– द्वाभ्यामन्या द्व्यन्या, द्व्यन्यः, द्व्यन्यत् ॥ ४३ ॥ बहुव्रीहिर्वाच्यलिङ्गः– चित्रा गावोस्याश्चित्रगुः स्त्री, चित्रगुर्ना, चित्रगु कुलम् । अदिङ्नाम्नामिति किं– दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा, एवं पूर्वोत्तरा सा विदिक् । गुणादिभिर्योग उपाधिः प्रवृत्तिनिमित्तं येषां ते परगामिनो वाच्यलिङ्गाः । गुणोपाधि– शुक्ला शाटी, शुक्लः पटः, शुक्लं वस्त्रम् । द्रव्योपाधि– दण्डिनी स्त्री, दण्डी पुमान्, दण्डि कुलम् । क्रियोपाधि– पाचिका, पाचकः, पाचकम् ॥ ४४ ॥ कर्त्रर्थे संज्ञावर्जिताः कृदन्ता वाच्यलिङ्गाः– कर्त्री, कर्ता, कर्तृ, कुम्भकारी, कुम्भकारः, कुम्भकारम् । असंज्ञायामिति किं– प्रहः, व्याघ्रः । कर्तृकर्मार्थे कृत्या वाच्यलिङ्गाः– वास्तव्या, वास्तव्यः, वास्तव्यं, वसेस्तव्यत्कर्तरिणिच्च ( वा० ), कर्तव्या, कर्तव्यः, कर्तव्यम् । कर्तरि कर्मणीति किं– स्नातव्यं त्वया, ब्रह्मभूयं, हत्या । असंज्ञायामित्येव– सूर्यः, मिश्रोध्योनरे ( सू० ) । तेन रक्तमित्याद्यर्थेऽणादितद्धितान्ता वाच्यलिङ्गाः– हरिद्रया रक्ता हारिद्री, हारिद्रः, हारिद्रं, लाक्षाभिर्युं( मो र )क्ता लाक्षिकी, लाक्षिकः, लाक्षिकं, कृत्तिकाभिर्युक्ता कार्तिकी पौर्णमासी, कार्तिको दिवसः,

कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।
अणाद्यन्तास्तेनरक्ताद्यर्थे नानार्थभेदकाः ॥ ४५ ॥
षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।
परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥

इति लिङ्गसंग्रहवर्गः । ५ ।

---

कार्त्तिकमहः । इन्द्रो देवतास्या ऐन्द्री ( ऋक् ), ऐन्द्रो मन्त्रः, ऐन्द्रं हविः । असंज्ञायामित्येव– श्रवण पौर्णमासी, अन्यथा पौर्णमासी, सञ्ज्ञायां श्रवणाश्वत्थाभ्याम् ( सू० ) इत्यणो लुक् । नानाविधार्थविशेषा येषां ते वाच्यलिङ्गाः– को ब्रह्मा, कं शिरः, नभः खं, नभा श्रावणः । नानार्थो विशेषणानि केचित्– मूर्खो, मूर्खा, मूर्खं, विदुषी, विद्वान्, विद्वत् ॥ ४५ ॥ ष्णान्ताः षट् ( सू० ) इति षट्संज्ञकाः, तथा युष्मदस्मच्छब्दौ, आख्यातान्यव्ययानि च त्रिलिङ्ग्यां समानि लिङ्गकृतविशेषरहितानीत्यर्थः । षट् स्त्रियः, षट्पुंसः, षट् कुलानि, पञ्च स्त्रियः, पञ्च शराः, पञ्चेन्द्रियाणि, त्वं स्त्री, त्वं पुमान्, त्वं कुलं, अहं स्त्री, अहं पुमान्, अहं कुलं, भूते स्त्री, भूते पुमान्, भूते कुलं, नाना स्त्रियः, नानादेशाः, नानाकुलानि, उच्चैः स्त्री, उच्चैस्तरुः, उच्चैर्वनं, तत्र पुरि, तत्र देशे, तत्र वने, एवं कति स्त्रियः, कति जनाः, कति स्थानि । लिङ्गविशेषविधौ पूर्वापरविरोधे परं लिङ्गं भवति । असुरपर्यायाः पुंस्त्वमित्यस्य विषये– नैर्ऋतः, राक्षसः । द्व्यच्कमसिसुसन्नन्तमिति तृतीय इत्यस्य विषये– इदं तेजः, यशः । इहोभयं प्राप्नोति– इदं रक्षः, परत्वात्क्लीबे । इह यदोक्तं तल्लक्ष्यतो द्रष्टव्यं, यथा– गोधा पुंस्त्वजापि स्त्री, तथा पोटा नपुंसकमपि स्त्री । तथान्यच्च गुणसंदेहे नपुंसकलिङ्गं प्रयुज्यते– किं तस्या जातं स्त्री पुमान्वा, शक्य स्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तथा तयप्प्रत्ययान्त धर्मवृत्ति स्त्रीनपुंसकयोः– वर्णानां चतुष्टयी, वर्णानां चतुष्टयम्, वेदानां त्रयी, वेदत्रयम् । धर्मिवृत्ति तु वाच्यलिङ्गं– त्रय्य स्थितयः, त्रये लोकाः, त्रयाणि जगन्ति । तथा छन्दसोऽण् स्वार्थे क्लीबे– गायत्र्येव गायत्रं, अनुष्टुबेवानुष्टुभम् । तथा इक्-श्तिपन्तं पुंसि– अयं वृद्धिः, अयं पचतिः । तथा दारद् हस्तेरश्च स्त्रियो– इयं दरद्, गृहकणिका, छत्रिका, दण्डिका, नालिका, नासिका । तथा प्रमाणाद्या अजहल्लिङ्गवचनाः– वेदाः प्रमाणं, स्मृतयः प्रमाणं, भूतमिव ब्राह्मणी, विनाशियो भद्रम् ॥ ४६ ॥ इति लिङ्गसंग्रहवर्गः । ५ । [ इत्यमरसिंहकृतौ नामलिङ्गानुशासने । सामान्यकाण्डस्तृतीय साङ्ग एव समर्थितः ॥ ]

इति श्रीमत्क्षीरस्वाम्युत्प्रेक्षितेऽमरकोशोद्घाटने सामान्यकाण्डस्तृतीयः समाप्तः ।

---

# APPENDIX I.

---

An alphabetical list of authors and works quoted by Kshîrasvâmin in his commentary on Amarakosha.

(The figures refer to pages).

Page

98 अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

103 पद्भ्यामेव यथातथेति

119 अभिवाद्योपसंपाद्यः

162 निष्प्रवाणिर्नवः पटः

167 येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम्

175 सूर्यः समेपा समः

178 कुलस्यान्त. मभु स्त्रिय.

180 प्रिय[या]दर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः ।
निर्वाणमाप्यते येन सरागेणापि चेतसा ॥

186 संवाहनं स्पर्शसुखम्

188 अकरणिरिह भूयादभ्रशस्तस्य धातुः

189 पुलका इव धान्येषु
पुलाककारी विपुलाशयः स्यात्

190 तपो न कल्कोध्ययनं न कल्कः

192 विचरेद्युगमात्रदृक्

193 वर्जयेत्कटधूमं तु

195 प्रकीर्णभाण्डामनवेक्ष्यकारिणीम्
क्षणे रक्ष्याः कुलस्त्रियः
क्षणपरपुरजिद्दत्तशूलप्रहारान्

199 कृत्तदेहः स्नायुसारः

201 यदध्यासितमर्हद्भिस्तद्धि तीर्थम्
तीर्थं तदव्यक्तव्ययोः
एकमेवेदं संविद्रूपम्
प्रवृत्तौ च निवृत्तौ च संविद स्यापयेद्गणे
धर्मस्योपनिपत्परा

202 जीवेच शरदां शतम्
पदमापदि माधवः
सूर्यांशव शशिनि लब्धपदा यथैव
नवनखपदलेखालाञ्छितं बाहुमूलम्
बाहुप्रमाणं परिधिरच्छिन्नश्रोतिपञ्चकः
आर्धि प्राप्तो यो न मुच्येत्स धीरः
अनुबन्धमवस्था च ज्ञात्वा दण्डं निपातयेत्

203 सिन्धोः परमपूरुषम्

205 पर्ववर्जं व्रजेच्चैनाम्

206 व्याप्ते व्योमनि वर्ष्मणा

Page

207 क्षरत्येनः कृतं पूर्वम्
गर्भस्थेन समः सदा
रम्भागर्भमृदुः
भर्तृगर्भद्रुहा चैव
दुन्दुभ्या किल तत्कृतं पतितया यद्
द्रौपदी हारिता

208 जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः

209 दर्भा. कृष्णाजिन मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुन पुन ॥
न शनैः मल्लय गच्छेत्
समयाच्छ्रावयेच्छिष्यम्

210 गुणिना नात्ययं कुर्यात्
वाक्पारुष्येत्ययः शतम्
सर्वस्यैव हि दानस्य प्रहीता गुरुरुच्यते ।
कन्यायाश्चैव विशायाः प्रदाता पूज्यते गुरुः ॥
प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जन.

211 कृपाकपर्यामभ्येति सत्रपः किं न गोत्रभिद्
सर्वाः क्रिया मन्त्रमूला नृपणाम्
महापातकिना पुंसां भवेत्प्राणान्तिका क्रिया
गुरुदेवक्रियारतः
क्रिया विना को हि जानाति कृत्स्नम्
अतो न रोदितव्यं हि क्रिया कार्याः प्रयत्नतः
विच्छायः पुरुषो भवेत्
प्रकान्तच्छाय आदर्शः
सप्त कक्ष्या अतिक्रम्य
परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरीभवेत्
तानि कृत्याहतानाव

212 वारं वारमुदारसंगरमुखे
संगरो विक्रियाकरः
अन्योन्य वृत्तसंगरौ
संगरे शरण सुहृत्

213 आडम्बराणि पूज्यन्ते स्त्रीषु राजकुलेषु च
जये धरित्र्याः पुरमेव सारम्
वर कूपशताद्वापी

214 मात्राशी सर्वकालं स्यात्

215 चतु.पाटीमद तन्त्रम्
साधारणं भवेत्तन्त्रम्

Page

दुष्करं पुष्करं गन्तुम्
पर्वतान्तरिताः स्त्रियः
अन्तरज्ञो भव सदा धनस्य च जनस्य च
अयमभ्य(न्त्य)न्तरो मम
दृष्ट्वान्तर ज्योतिरुपारराम
216 प्रश्नश्चोद्यधिया पृच्छा तस्य भञ्जनमुत्तरम्
217 सितपटच्छन्नपाली कपालीम्
शीलधनः साधुः
218 षड्युग्मकरतलस्तालो वितस्तिः शङ्कुरानमम्
न केवलं भुवो भर्ता
धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते
भावाढ्या विलासिन्यः
स्वं भावं भावयेद्योगी
भावाश्चित्तजया भवन्ति भवता भाव्यन्त एते यथा
219 उत्सुकानीव भान्ति स्वाः
हृदि स्वमवलोकयन्
प्रभूताः स्वा न दीप्यन्ते
वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन व्यवस्थितः ॥
उत्क्रान्तसत्त्वो मृगः
220 त्यक्तापदेशो यतिः
अग्रतो बाहुपाशेन केशपाशेन पृष्ठतः ।
पार्श्वयोः कर्णपाशेन सर्वतो बन्धन प्रिया [ये] ॥
त्व[म]द्दन्ताङ्कितपालिकक्षरुधिरक्लिन्नाधपुट्दुःखं शरम्
221 चतस्रः कर्षूः पितृभ्यः कुर्यात्
222 रसस्यातिरसः सर्पिः
रोदोरन्ध्रमजिहदत्[न्]
उपष्टम्भकं बलं च रजः
युक्तश्छन्दांस्यधीयीत
224 सर्वान्गुणानेष गुणोऽतिभाति
सक्रयुवानो गीर्वाणाः
आराच्छत्रोः सदा वसेत्
समीतान्स्थापयेदारात्

Page

अहो बत महत्कष्टम्
बत वितरत तोयं तोयवाहा हिमान्त [नितान्तं]
225 वृद्धिरित्येव या वृद्धिः
नाना नारीर्निष्फला लोकयात्रा
ननु चण्डि प्रसीद मे
आशीविषो वा संक्रुद्धः सूर्यो वाभ्राविनिर्गतः ।
भीमोऽन्तको वा समरे गदापाणिरदृश्यत ॥
226 सामिसंमीलिताक्षी
नूनं हन्तास्मि रावणम्
जोषमास्ते जितेन्द्रियः
को नामायं सवितुरुदयः
दृष्टेऽपरे रोदिति नाम तन्वी
स्वर्गतस्य हापुत्रस्य
गोत्रस्खलितं किलाश्रुतं कृत्वा
227 आपतन्तमभितोऽरिमपश्यत्
भिक्षित्वापि बुभुक्षिता यदहहा
अहह प्रज्ञाप्रकर्षो राज्ञः
चिराय निर्धनो भूत्वा भवत्यह्ना (ह्ना) महाधनः
कान्तं[न्तां] मुहुर्ध्यायति
पुनः पुनर्वारि विवेदभूरि
शश्वद्भक्ति कुशिक्षितः
अभीक्ष्णमास्फालयतीभकुम्भम्
साक्षरत्यभिसारिका
सपदि प्रददत्युपेक्षितोऽभिः
द्राग्विद्रुतं कातरैः
तरसोदिता सह जलेषु
किमुत ब्रह्मवित्रिभिः
सुसिक्त आम्रः फलति
विना वार्तं विना धर्मम्
त्वामन्तरा तामरसायताक्षि
228 वितर गिरमुदारां येन मूकाः पिकाः स्युः
पद्भ्यां याति कुतश्चन
कदाचिच्छूरता याति मरणे कृतनिश्चयः
सत्रा कलत्रैर्गार्हस्थ्यम्
सदृशो द्विजिह्वैः सर्पः

*Vide* Notes for the verification of some unverified passages in the Commentary

---

